C. 12. 9586
B. 12. 258(7). 27
K. 12. 273. 27

आत्मानमसमाधाय समाधित्सति यः परान् ।
विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् ॥ २७
यो राज्ञो दम्भमोहेन किंचित्कुर्यादसांप्रतम् ।
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते ॥ २८
आत्मैवादौ नियन्तव्यो दुष्कृतं संनियच्छता ।
दण्डयेच्च महादण्डैरपि बन्धूननन्तरान् ॥ २९
यत्र वै पापकृत्क्लेश्यो न महद्दुःखमर्छति ।
वर्धन्ते तत्र पापानि धर्मो ह्रसति च ध्रुवम् ।
इति कारुण्यशीलस्तु विद्वान्वै ब्राह्मणोऽन्वशात् ॥ ३०
इति चैवानुशिष्टोऽस्मि पूर्वैस्तात पितामहैः ।
आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च ॥ ३१
एतत्प्रथमकल्पेन राजा कृतयुगेऽभजत् ।
पादोनेनापि धर्मेण गच्छेत्त्रेतायुगे तथा ।
द्वापरे तु द्विपादेन पादेन त्वपरे युगे ॥ ३२

वृत्तिं ). G2 प्रतिकूलोनुवर्तते. —c) K1 स चैव; D4 T1 G1 सदेव (for सदैव). T1 G1. 2 [इ]ति (for हि). Ś1 K1. 2 गुणैर् (for गुरोर्). T1 G1–3 M5 वृत्तिम्. —d) T1 G1. 3 अन्ववर्तत (for अनुवर्तन्ति).

27 Before 27, T G1. 3 ins. द्युमत्सेनः. G2 damaged. —a) K2 असमादाय; T1 G1. 3 च (G3 चा-) समाधाय (for अस°). —b) Da3. a4 M8 समाधित्संति. K4 T1 G1 पुमान्; K7 D4–7. 9 G3 परं (for परान्). —d) B8 (marg.) Ca (gloss: अभिभवन्ति) प्रसहंति; T3 पातयंति.

28 Before 28, Ś1 K1. 2. 4 V1 ins. द्युमत्सेनः. T G1–3 M7 transp. 28 and 29. —a) Ds1 यद् (for यो). D4. 9 राज्ञा; D5. 7 राजा; D6 [ऽ]शक्तो (for राज्ञो). K6 B6. 8 (marg. as in text). 9 Da4 दंभयोगेन; T1 G1–3 M1. 5. 6 डंभमोहेन (for दम्भ°). —b) G1 कार्याद् (for कु°). Ś1 K1. 2 कुर्यात्किंचिदसांप्रतं. ❀ Cs: असांप्रतं, प्रजाहिंसनम् । ❀ —c) K1. 2 स्म; B8 (marg.) स्याद् (for स). —d) K7 D8 D4. 6. 9 यथा (for तथा).

29 T G1–3 M7 transp. 28 and 29. —a) K1 निवर्तव्यो; K7 नियंतान्या (for नियन्तव्यो). —b) Ś1 K1. 2 Da4 दुष्कृतः; M1 °तिं; M7 °तीन्. K7 संयनिच्छाता (sic); Da3 Ds2 D2 संनियच्छति (D2 °तां). —c) Ś1 K1. 2 दंडयेश्च; K7 °ये (for °येच्च्). T2 G1. 2 M5 तथा; M1 महान् (for महा-). G3 -दंडो (for -दण्डैर्). —d) B7 अनंतराः; G2 च नेतरान्. ❀ Cn: अनन्तरान्, पुत्रसोदर्यादीन् । ❀

30 Before 30, M7 ins. द्युमत्सेनः. —a) K2 यत्रैव; T G1–3 यो राज्ञः (for यत्र वै). B8 (marg. as in text) पापकः (for °कृन्). K6 V1 B0. 6–9 D13 Ds1 D5–7 क्लीबो; Da3 Dn1. n4 D2. 3. 8 नीचो; T G1–3 क्लेशं; M1. 5–7 क्लेशान् (for क्लेश्यो). —b) T2 महा- (for महद्). K2. 4 B8 (marg. as in text) Da4 D5. 7 अर्हति; B7 अर्चति; Da3 T1 G1. 3 इच्छति; D5 [illegible] T2 G2 M1. 5–7 ऋच्छति (for अर्छति). —c) K1 वर्धे [illegible] Da4 वर्धते; T G1–3 वर्त (T2 °र्तं)ते. T G1. 3 वा [illegible] (for पापानि). —d) Ds1 D5 हसति; T1 G1. 3 [illegible] (for ह्र°). T1 G1. 3 तं; T2 वै; M1 तद्; M[illegible] तु (for च). — Before 30ef, M1. 6 ins. द्युमत्सेन[illegible] —e) T G1–3 M1. 5–7 वै (for तु). Ds1 इति कारु[illegible] शाल्स्तु. —f) T1 G1–3 यो विद्वान् (for विद्वान्वै). M1. 6. 7 मा (for वै). K2 ब्रह्मणो. K7 ब्राह्मणाद्भवशा[illegible] (hypermetric); T G1–3 °णानुगः (for °णोऽन्वशात्). K4 M5 [ऽ]नुगात् (M5 °गः); Ds1 [ऽ]वशाद; D[illegible] M6 [ऽ]न्वगात्.

31 a) Da4 -तिष्टो (for -शिष्टो). —b) Dn4 पिता[illegible] महः. —c) V1 damaged; G2 आश्वासयन्द्वि (for °यद्भिः). D8 सुकृत (Ds1 °श)म्; T2 सततम्; G[illegible] सुहृदम् (for °भृशम्). —d) D5. 7 अनुक्रोशं. G3 [illegible] (for च).

32 a) K7 D4–7. 6 पूर्वेण (for प्रथम-). ❀ Cp: एतत्, राज्यम् । ❀ ❀ Cn: प्रथमकल्पेन, मुख्येनाहिंसामयेन दण्डेन ॥ Cs: सर्वभूतहिंसावर्जनधर्मेण । ❀ —[illegible]) K[illegible] Ds1 D4 राज्ञा (for राजा). D4 कृत्यं (for कृत-). V1 D6. 9 [ऽ]भवत्; K6 B8 यजेत्; K7 Cpp भवेद्; B0. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7. 8 T[illegible] G2 M1. 5–7 जयेत्; D4 युगे; T1 G1. 3 [ऽ]जयत्; लभेत् (for ऽभजत्). —c) Ś1 K1. 2. 4 पा(K4 प[illegible])देनैकेन धर्मेण; G2 पादेनापि न ध°. —d) K7 D4. 9 ग[illegible] (for गच्छेत्). Ds1 त्रेतायुगं. D6 [ऽ]नघ (for तथा). —e) B8 (marg. as in text) द्वापरे तु तदर्धेन; M[illegible] 6. 7 °रे तदुपार्धेन. —f) K2 D7 T1 G1. 3 तु परे; B8 Da3. a4 D8 D4–6. 9 M7 त्ववरे; V1 B0. 3 (marg.) [illegible] Dn1. n4 D2. 3. 8 T2 त्वधरे (for त्वपरे).

33 a) ❀ Cs: प्रासे, प्रवृद्धे । ❀ —b) G2 damaged. Ś1 K1. 4 B0 D7 T1 G1. 3 राज्ञा; K2 Da3. a4 M1.[illegible]

तथा कलियुगे प्राप्ते राज्ञां दुश्चरितेन ह ।
भवेत्कालविशेषेण कला धर्मस्य षोडशी ॥ ३३
अथ प्रथमकल्पेन सत्यवन्संकरो भवेत् ।
आयुः शक्तिं च कालं च निर्दिश्य तप आदिशेत् ॥ ३४
सत्याय हि यथा नेह जह्याद्धर्मफलं महत् ।
भूतानामनुकम्पार्थं मनुः स्वायंभुवोऽब्रवीत् ॥ ३५

इति श्रीमहाभारते शान्तिपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

# २६०

युधिष्ठिर उवाच ।
अविरोधेन भूतानां त्यागः षाड्गुण्यकारकः ।
यः स्यादुभयभाग्धर्मस्तन्मे ब्रूहि पितामह ॥ १
गार्हस्थ्यस्य च धर्मस्य त्यागधर्मस्य चोभयोः ।
अदूरसंप्रस्थितयोः किं स्विच्छ्रेयः पितामह ॥ २
भीष्म उवाच ।
उभौ धर्मौ महाभागावुभौ परमदुश्चरौ ।
उभौ महाफलौ तात सद्भिराचरितावुभौ ॥ ३

C 12. 9598
B 12. 260(8).3
K. 12. 274. 3

---

राजा; Dn1. n4 Ds D2. 8. 6. 8 T2 M7 राज्ञो. B6–9 Da3. a4 D5. 7 च (for ह). — c) B7. 9 Da3. a4 तावत् (for भवेत्). K7 D3. 6. 9 कालावशेषेण (for कालवि°). — d) Dn1 काला; G1. 2 काल- (for कला). Dn4 धर्मेण. K3 शोडषी; Ds1 G2 शोडशी.

34 a) T1 अतः (for अथ). T1 G1. 3 प्रथमकल्पे तु (for °कल्पेन). — b) K6. 7 Da4 D2, 3, 5. 6. 8 G1. 2 M1. 5–7 सत्यवत्; T1 G3 M7 (sup. lin.) °वान् (for सत्यवन्). — d) G2 partly damaged. Ś1 (sup. lin. as in text) K3 तत; K1 तप्त (for तप). K3 T G1–3 M1. 6 आविशेत्; B9 D4 (by corr.) आदिशत्. ❀ Cs: निर्दिश्य, निश्चित्य। ❀

35 a) B3 (marg. as in text) सत्येन. Ds1 M6. 7 तेन (for नेह). D7 T G1–3 सत्यायनं (T1 °य हि) तथा तेन (D7 नेह). — b) K3 Da3. a4 जह्या; T1 G1. 3 तस्माद् (for जह्याद्). B9 धर्मफले; G2 °बलं (for °फलं). ❀ Cn: धर्मफलं महत्, ज्ञानम्। स्वर्गादेः क्षुद्रत्वात्। ❀ — c) K6 °कल्पार्थं (for °कम्पार्थं). — d) K1 मनः. D9 यतिः स्वायंभवोऽब्रवीत्.

Colophon. G6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — Sub-parvan: Ś1 K1. 2, 4, 6, 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3 M1. 5–7 मोक्षधर्म. — Adhy. name: Ś1 K1. 2. 4 सत्यवतोः संवादः; K6 B6. 7. 9 Da3. a4 D6 सत्यवद्द्युमत्सेनसंवादः; K7 D4. 5. 7. 9 द्युमत्सेनसंवादः; V1 B8 D8 M1. 5–7 द्युमत्सेनसत्यवत्संवादः; Bo Dn1. n4 Ds D2. 3 द्युमत्सेनसत्यवद्वाक्यं. — Adhy. no. (figures, words or both): K6 B7 M1. 6. 7 92; Dn1 D7 T1 G1. 3 M5 94; Dn4 Ds2 93; Ds1 84; D8 88; T2 107; G2 damaged. — Śloka no.: Da4 Dn1 37; Dn4 35; Ds1 27; Ds 36.

## 260

☞ This adhy. is missing in G6 (cf. v. l. 12. 259. 1).

1 a) D8 अविशेषेण भूतानां. — b) K4. 6 Bo. 6–9 K1. 7 Da3 Dn1. n4 Ds1 D2. 3. 8 योगः (for त्यागः). T G1–3 -कारितः G1 षड्गुण्य- (K7 °ण-) (for षाड्गुण्य-). ❀ Ca: षाड्गुण्यकारकः, षण्णां ज्ञानैश्वर्यबलवीर्यतेजःशक्तीनां गुणानामीश्वरे नियतानां जीवेऽपि कारक इति निश्चित्य ज्ञातं मया। अधुना तु य उभयभाक् ज्ञानकर्मसमुच्चयान्वयी स्याच्चं मे ब्रूहि। ❀ — c) G1 स्याम् (for स्याद्). Ds उभयथा (for °भाग्). — d) Ś1 K1 Dn1 G2 तं (for तन्).

2 K3. 4 D5. 7 G3 om. (hapl.) 2. — a) K1 गार्हस्त्यस्य; K7 Bo. 6 Da4 Ds1 D2 T1 G3 गार्हस्थस्य (for °स्थ्यस्य). D9 lacuna; T1 G1. 3 स्व- (for च). — b) K7 D4. 6. 9 न्यास-; Bo. 7. 8 Dn1. n4 Ds D2. 8. 8 योग- (for त्याग-). — V1 reads 2c–4b on marg. — c) K7 D4. 9 अदूरस्थं. Ds T G1. 3 Cp (Cpp as in text) Cs सु(Ds1 सू)दूरसंप्रस्थितयोः. ❀ Cs: अत्यन्तभिन्नप्रस्थानयोः। ❀ — d) K7 Dn4 D4. 9 किंचिद्; Ds कच्चिद् (for किं स्वित्).

3 V1 reads 3 on marg. K3 Da4 om. the ref.

C. 12. 9599
B. 12. 269(8).4
K. 12. 274. 4

अत्र ते वर्तयिष्यामि प्रामाण्यमुभयोस्तयोः ।
शृणुष्वैकमनाः पार्थ छिन्नधर्मार्थसंशयम् ॥ ४

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर ॥ ५

आम्नायमनुपश्यन्हि पुराणं शाश्वतं ध्रुवम् ।
नहुषः पूर्वमालेभे त्वष्टुर्गामिति नः श्रुतम् ॥ ६

तां नियुक्तामदीनात्मा सत्त्वस्थः समये रतः ।
ज्ञानवान्नियताहारो ददर्श कपिलस्तदा ॥ ७

स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम् ।
स्यरामि शिथिलं सत्यं वेदा इत्यब्रवीत्सकृत् ॥ ८

तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत् ।
हंहो वेदा यदि मता धर्माः केनापरे मताः ॥ ९

---

G3 om. (hapl.) 3ab. — a) Da4 T G1. 8 महाभाग (for °भागाव्). — b) T G3 M1. 6. 7 ·दुर्धरौ (for ·दुश्चरौ). — c) T1 G1. 8 महत्- (for महा-). K4 Bo Da3 Dn1. n4 D8 D2. 8. 8 T G1-8 तौ तु (for तात). B9 उभौ महाफलोपेतौ.

4 V1 reads 4ab on marg. — a) G1-8 पुत्र (for अत्र). K4 om. ते. Ś1 K1. 2. 4 वर्णयिष्यामि (for वर्त°). — b) K1 प्रमाण्यम्; T1 G1. 8 माहात्म्यम्. V1 अपि; Bo तथा (for तयोः). — c) T G1. 8 M1. 5-7 राजन्; G2 lacuna (for पार्थ). — d) T2 शृणु (for छिन्न-). B8 (marg. as in text) D5 ·संशयः; T1 ·संश्रयं (for ·संशयम्).

5 T1 om. 5a-6b. — c) Hypermetric (Cn: अक्षराधिक्यमार्षम्). Ś1 K1. 2. 6. 7 Bo. 8 om. च. D4. 9 कपिलगोश्च संवादं; D5. 7 कपिलर्षेश्च सं°; G1. 8 कपिलस्य च गोभ्यश्च; G2 °स्य यतेश्चैव. — d) G1-3 संवादं तं निबोधय.

6 T1 om. 6ab (cf. v. l. 5). — a) G1. 8 आत्मार्थम्; G2 आत्मानम् (for आम्नायम्). Da3. a4 D5. 7 ·पश्यंति; G2 ·पश्यामि (for ·पश्यन्हि). K8 om. हि. ❀ Ca: आम्नायं श्रोत्रियागमने मधुपर्कार्थं पशोर्मारणप्रशंसकम् । ❀ — 6bc is damaged in G2. — b) Ds1 प्रामाण्यं; T2 प्रमाणं (for पुराणं). — c) D4 नघुषः. D4. 9 M6. 7 आरेभे (for आलेभे). — d) T G1. 8 M1. 5-7 यष्टुं (for त्वष्टुर्). D7 माम् (for गाम्). K7 D4 म (for नः). Da3 त्वष्टुगार्हमिति श्रुतं; G2 इष्टां गतिमिति श्रुतिः. ❀ Cp: त्वष्टुः, त्वष्टारं देवमुद्दिश्येत्यर्थः । ❀

7 a) K1. 4 ता; D4. 9 तान्; T1 G1. 8 गां; G2 तं (for तां). G2 नियुक्तम्. ❀ Cn: नियुक्तां, हन्तुं पुरस्कृताम् ॥ Cs: नियुक्तां यूपे बद्धाम् । ❀ — b) D5. 7 सत्पथः (for सत्त्वस्थः). K7 V1 Bo. 6-9 Da3 Dn1. n4 D8 D2-4. 6. 8 T2 M5. 7 संयमे (for समये). G2 नरः (for रतः). — c) Da4 निहताहारो (for नियता°). — d) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 8. 6. 1 T2 तथा (for तदा).

8 a) Da4 Cp सं· (for स). Ś1 K1. 2. 4 अतुलां (for उत्तमां). ❀ Cp: संबुद्धिं सम्यग्बोधम् । ❀ — b) K1 D4 नेष्ठिकीम्; G1 नैष्ठिकम्. K1 Ds1 ·भयं; K7 D4. 1 ·भयः (for ·भयाम्). ❀ Cp: नैष्ठिकीं प्रामाणिकत्वेन स्वमूलत्वात् ॥ Cs: नैष्ठिकीं, मोक्षविषयाम् । ❀ — c) K1 D4. 9 Cp स नाम (for स्यरामि). K6 शैत्यं (for सत्यं). K7 Da3. a4 D7 सता( Da3 °ती )मशिथिलं सत्यं; V1 Bo. 6-9 Dn1. n4 D8 D2. 8. 5. 6. 8 T G1. 8 M1. 5-7 Cs सता( B9 सत्या-; Dn1. n4 D2. 8. 6. 8 सती-; D8 T G1. 8 M1. 5-7 Cs [gloss: औपनिषदीं] परा)मशिथिलां सत्यां; G2 परमां शिथिलां सत्यां. ❀ Ca: अशिथिलां, शिथिलवचनं तु दयापरम् ॥ Cp: (reading स नाम शिथिलं): शिथिलं, शनैः । सत्यं वचनम् । वेदा एवमेव प्रतिपादयन्तीत्यभिप्रायेण सत्यपदप्रयोगः ॥ Cs: अशिथिलां, तर्कैश्चालयितुमशक्याम् । सत्यां, नित्यफलाम् ॥ Cv (reading स्वरेण शिथिलोऽसत्या): उच्चैर्वक्तुं भीत्या अल्पस्वरो भूत्वा, गोमेधस्यापि विधानात्, वेदा असत्या इति सकृदब्रवीत् । ❀ — d) Ś1 K1. 2. 7 D4. 5. 7. 9 T1 G1. 8 M1. 6 वेद (for वेदा). ❀ Cn (reading वेदा३): वेदा३ इति गर्हायां प्लुतिः ॥ ❀

9 a) K7 D4. 9 G1. 8 स्यूतरश्मिः; Some MSS. स्यूमरश्मिः; D8 संस्मृशन्स; G2 सूर्यरश्मिः (for स्यूम°). — b) T1 G2 सवितृ (for यतिम्). — c) K6 T2 अहो; B3 (marg.) हं भो; D5. 7 भो न; T1 G3 डंहो; Cs (gloss: अयथार्थत्वेन) दंभो; Cv (gloss: पापहेतुत्वात्) अंहः (for हंहो). D5. 7 आभि· (for यदि). G1. 2 डंभो वेदा यते धर्मो. ❀ Ca: तर्हि के नाम संसारमोचका ग्रन्थाः । न केऽपीत्याक्षेपार्थः ॥ Cn (reading वेदा३): अत्रापि गर्हार्थायाः प्लुतेरनुवादः । ❀ — d) K7 धर्मः. G1. 3 धर्मः केन परो मतः. Cp: वेदा यदि मताः अवमताः इत्यर्थः । तदा केन प्रकारेण प्रमाणेन अपरे भवदभिमता शमदमादयोऽपि धर्मा मताः । तत्रापि वेदानामेव प्रामाण्यस्वीकारादित्यर्थः ॥ Cs: अपरे त्वदीयाः सांख्यादयः के धर्मा दम्भत्वेन मताः । सर्वाणि शास्त्राणि दम्भत्वेन मतानीत्यर्थः । ❀

तपस्विनो धृतिमतः श्रुतिविज्ञानचक्षुषः ।
सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः ॥ १०
तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः ।
का विवक्षास्ति वेदेषु निरारम्भस्य सर्वशः ॥ ११
कपिल उवाच ।
नाहं वेदान्विनिन्दामि न विवक्षामि कर्हिचित् ।
पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम् ॥ १२
गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति ।
गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः ॥ १३
देवयाना हि पन्थानश्चत्वारः शाश्वता मताः ।
तेषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलम् ॥ १४
एवं विदित्वा सर्वार्थानारभेदिति वैदिकम् ।
नारभेदिति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः ॥ १५
अनारम्भे ह्यदोषः स्यादारम्भेऽदोष उत्तमः ।
एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् ॥ १६
यद्यत्र किंचित्प्रत्यक्षमहिंसायाः परं मतम् ।

C. 12. 9612
B. 12. 260(a). 17
K. 12. 274. 17

---

10 ᵃ) Ś1 K1.2.4 धृतियुताः; B3 Dn1 D2.8.9 °मंतः (for °मतः). — ᵇ) K7 D5.9 T1 G1.3 M1.6.7 श्रुत- (for श्रुति-). K7 D9 -विज्ञात- (for °ज्ञान-). — ᶜ) Dn1 पूर्वम्; M1.6.7 सत्यम् (for सर्वम्). Ś1 K1.2.4 च; M1 तु (for हि). — ᵈ) K2.4 व्याकृतं; Dn1 D4 व्याहृते; G1 व्याघृतं; G2 व्यावृतं (for व्याहृतं). Ś1 K1.2.4.7 D4.5.7.9 विदितात्मनां (K1 °त्मवान्); G2 °तं मनः (for °तात्मनः). ❀ Cn: विदितात्मनः, नित्यज्ञानवतः परमेश्वरस्य । ❀

11 ᵃ) Ś1 K1.2.4 Ds1 D3 M1.6 -धृतस्य (for -तृष्णस्य). — ᵇ) K1 विष्वरस्य; K2 विज्ञु°; D2 विदु° (for विज्व°). B3 (marg.) गताशिषः (for निरा°). — ᶜ) K4 G2 का विवक्ष्या; G1 अविवक्षा. M1.6 देवेषु; M6 Cv देहेषु (for वेदेषु). — ᵈ) K6 V1 Bo.6-9 Da3 Dn1.n4 D8 D2.8.5-8 सर्वतः; T2 योगिनः (for सर्वशः). ❀ Ca: निरारम्भस्य मुमुक्षोः वेदेषु कर्मप्राशस्त्यदर्शकेषु का विवक्षा अस्तीत्यर्थः ॥ ❀ Cn: तस्य ईश्वरस्य न वैषम्यविवक्षया वेदवचनं संभवति ॥ Cp: तृष्णावन्तो हि कामज्वरसंतप्ताः पापिष्ठा विषयलोलुपतया वेदान्विनिन्दन्ति, स्वाभिप्रायेणार्थं कल्पयन्ति । भवांस्तु न तथेत्यर्थः ॥ Cv: निरारम्भस्य, यज्ञाद्यारम्भरहितस्य तव देहेषु का विवक्षास्ति । अत एवेदं विनिन्दसीति भावः । ❀

12 ᵃ) T1 G1-3 वेदं न (for वेदान्वि-). — ᵇ) M6 के (for न). K7 V1 B6-9 Da4 Dn1 D8 D2-5.8 Cn (gloss: विषमान्वक्ष्यामि) विवक्ष्यामि; T1 G1-3 M1.5-7 Cp.8 विवक्षा( G2 °क्ष्या )स्ति (for °क्षामि). ❀ Cp: विवक्षा वेदस्य तात्पर्यार्थः । ❀ — ᶜ) K6 Bo.6.8.9 Ds1 D2 आश्रमिणः (for °णां). Da4 धर्माणि; G1.2 कर्म (for कर्माणि). — ᵈ) G1 कार्मार्थानि (sic); G3 नैका°. ❀ Cv: एकार्थानि, एकस्वर्गाद्यफलानि । ❀

13 ᵃ) K7 D3.9 एवं (for एव). Ds1 परित्यागो (for °त्यागी). ❀ Cp: गच्छति, संसाराग्निर्गच्छति ॥ Cv: गच्छति, परलोकम् । ❀ ❀ Ca: परित्यागी, भिक्षुकः । ❀ — ᵇ) Ds1 वानप्रस्थस्य (for °स्थश्च). — ᵈ) Ds2 अधि-; T1 M1.6 अभि- (for अपि). M6 तावुभावपि गच्छतः.

14 ᵃ) K3 देवयानाय; K7 D4.8 °यानादि-; G3 °यानानि (for °याना हि). — ᵇ) Ds1 स्वाचारः (for चत्वारः). Ds1 शाश्वतो. Ś1 K4 शुभाः; K1 शुभां; Ds1 मतः (for मताः). — D5 om. 14ᶜ-15ᵈ; D7 reads the same on marg. — ᶜ) K6 V1 Bo.6-9 Da3.a4 Dn1.n4 D2.3.6.8 M6 एषां; B3 (marg.) एते; D8 D7 T G1-3 M8 नैषां (for तेषां). — ᵈ) Ś1 K1 बलेषु (for फलेषु). ❀ Cp: फलेषु, अवान्तरप्रयोजनेषु सत्त्वशुद्ध्यादिषु बलाबलत्वं, ज्यायःकनीयस्त्वं नाम । ❀ — After 14, D8 reads 17, for the first time, repeating it in its proper place.

15 D5.8 om. 15 (for D5, cf. v. l. 14). D7 reads 15 on marg. — ᵃ) Da4 सर्वास्मान्; D7 G1 °स्मा (for -°र्थान्). — ᵇ) K6 Bo.6-9 Da3.a4 Dn1.n4 D8 D2.3.6 T1 M6 आर( M6 °ल )भेतेति; K7 D4.9 आरंभे( K7 °से )दिति; T2 G2.3 आलभे° (for आरभे°). K7 D6 D7 G1 सर्वार्थानारभेद्विति. ❀ Ca: वैदिकं; T3 वै मतं. आरभेत, आश्रमविहितं, फलाभिसंधिं विना कर्मेत्यर्थः । ❀ — ᶜ) K6 Bo.6-9 Da3.a4 Dn1.n4 D8 D2.3.6 T1 G1.3 M6 नार( G3 M5 °ल )भेतेति; T2 G3 नालभेदि( G2 °भेवे )ति; M7 नालंभेनेति (for नारभेदिति). D6 D1 वैदिकं नारभेतेति. वान्यत्र; G3 तान्यत्र (for चा°). — ᵈ) B6.7.8 सततं; B6 (marg.) नैष्ठिकात् (for °की). ❀ Cn: नैष्ठिकीत्यनेनैतस्याः सिद्धान्तत्वं दर्शितम् ॥ Cs: नैष्ठिकी, मोक्षविषया । ❀

16 ᵃ) B3 (marg.) M1.6 अनारंभो; T3 °छंभे (for °रम्भे). B3 M1.5-7 हि दोषः (for ह्यदोषः). G3 — ᵇ) Da3.a4 आरंभो; T2 आलंभे (for आरम्भे). — ᶜ) G3 उत्तमं. ❀ Ca: दोषः, अनिर्मोक्षरूपः । ❀

C. 12. 9512
B. 12. 2:9(e). 17
K. 12. 274. 17

ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि ॥ १७

स्यूमरश्मिरुवाच ।

स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः ।
फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते ॥ १८
अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये ।
ग्राम्यारण्या ओषधयः प्राणस्यान्नमिति श्रुतिः ॥ १९
तथैवान्नं ह्यहरहः सायं प्रातर्निरुप्यते ।
पशवश्चाथ धान्यं च यज्ञस्याङ्गमिति श्रुतिः ॥ २०
एतानि सह यज्ञेन प्रजापतिरकल्पयत् ।
तेन प्रजापतिर्देवान्यज्ञेनायजत प्रभुः ॥ २१
ते स्मान्योन्यंचराः सर्वे प्राणिनः सप्त सप्त च ।
यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम् ॥ २२

---

एत्रमस्थितशास्त्रस्य.

17 D8 reads 17 for the first time after 14. — a) B6 (marg.). 8 (marg. as in text). 9 यद्यच्च; Ds1 D5. 7 T G1-3 M5 यदत्र (for यद्यत्र). — b) T1 G1. 3 हिंसायाः परमं मतं. — c) T2 भूते (for ऋते). G2 स्वमथ (for स्वागम-). D8 (second time) एषां ज्यायःकनीयस्त्वं. — d) D8 (second time) फले (for ब्रूहि). K1 तस्य हि; Dn1 D8 D2. 3. 6. 8 (both times) यद्यदि (for त°). K2 पश्यति.

18 T1 G1-3 om. the ref. K4 स्युमरश्मिः; K7 D4. 9 स्यूत°; D5 स्थूम°; D6 स्युम°; D7 स्थूण° (for स्यूम°). — a) B7 -कालो (for -कामो). K2 यजेतीति; K6 प्रजेतेति (for यजे°). — c) K1 D9 प्रकल्प-; K6 B6. 7. 9 प्रत्यक्ष- (for प्रकल्प्य). K7 [अ]पूर्वं (for पूर्वं). D5. 7 फलं कल्पयते पूर्वं; T1 G1-3 सफलं कल्प( G2 °ल्प्य )पूर्वं हि. — d) K4. 7 B7. 9 D6 प्रतीयते; K6 B8 (marg.) D8 D4 T1 G1. 3 प्रजा° (for प्रता°).

19 a) D7 T1 G1 अजाश्च (for अजश्च). K2 T1 चाश्वाश्च; D2 G2 च श्वश्च; M5 छागश्च (for चाश्वश्च). K7 om. the second च. D5 अजश्चाश्वमेषश्च (sic). — b) K6 गोश्च; D5 पशोः (for गौश्च). G3 -गुणाश्च (for -गणाश्च). M1. 6. 7 गोश्च पक्षिण एव च. — c) K4. 6 B8 (marg.) ग्रामारण्या; D2 lacuna; M1. 6 ग्राम्यारण्याद् (for °रण्या). K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 चौषधयः; K7 D4. 9 M1. 7 औष° (for ओष°). — d) K7 इतः (for इति). D5 प्राणार्थमिति नः श्रुतिः; D7 प्रायश्चार्थमिति श्रुतिः.

20 D6 om. (hapl.) 20. — a) B8 (marg. as in text) यथा (for तथा). G2 [अ]न्या (for [अ]न्नं). Ś1 K1. 2. 4 अहरहः; B8 (marg. as in text) स्वह°; D8 ह्यहरहं (for °रहः). — b) K6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 D2-5. 7-9 T1 G1-3 M1. 6 निरूप्यते; D8 निहूयते (for निरुप्यते). — c) D5. 7 चापि (for चाथ). Ds1 M1. 6 धान्यश्च; T G1. 3 M5 धान्यानि (for धान्यं च). — d) B6 (orig.). 9 [अं]शम्; B6 (marg.) [अ]ङ्गम्; D2. 5. 7 [अ]र्थम् (for [अ]ङ्गम्).

21 a) D5. 7 -यज्ञानि (for यज्ञेन). — b) K4 D11 अकल्पयेत्; D9 °यन् (for °यत्). — c) D5. 7 ततः (for तेन). Ds2 वेदान् (for देवान्). — d) K4. 7 M1. 6 [अ]यजतः; G2 M7 यजत (M7 °तः) (for [अ]यजत).

22 a) K6 V1 Bo. 6-9 Da3 D9 D2. 5. 7. 8 तस्मा- (V1 तेस्या-; D5. 7 अस्या )न्योन्यच( B7 D9 °व )राः सर्वे; K7 D4 तस्माद्येन्ये वराः सर्वे; Da4 D8 (marg.) तदन्योन्यचराः सर्वे; Dn1 ते ह्यन्योन्यवराः सर्वे; Dn4 तस्माद्योरयतये पर्वैः; D3. 6 तस्माद्योग्यतराः सर्वे; D4 तस्माद्योन्यवराः सर्वे; T1 G1. 3 तेन्योन्यं च प्रजाः सर्वे; T2 तस्मान्योन्यपराः सर्वे; G2 तेन्यान्यां च पराः सर्वे: M1. 6 तस्मात्स्मोन्नवराः सर्वे; M5 तेस्मान्योन्यवराः सर्वे; M7 तस्मादज्ञपराः सर्वे. ❀ Ca (reading अन्योन्यचराः): परस्परं भक्षजाः ॥ Cs: अन्योन्यवराः, अन्योन्यस्माद्विशिष्टाः । ❀ — b) T1 G1. 3 तत्र (for the first सप्त). Ś1 (*sup. lin.*) K4. 6 Bo. 8 (marg.) Da3. a4 Dn1. n4 D8 D2. 3. 8 सप्तधा (K4 °तः); D6 सप्त वा (for सप्त च). — After 22ab, T1 G1. 3 Kumbh. ed. ins.:

711* गौरजो मनुजो मेषः अश्वाश्वतरगर्दभाः ।
एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः ।
सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा ।
महिषी वानराश्चैव सप्तारण्यास्तथा स्मृताः ।

[(L. 1) Kumbh. ed. श्वा वा (for मेषः). G1 उष्ट्राश्वतर- (for अश्वा°). — (L. 3) G3 सिंहव्याघ्र- (for सिंहा व्याघ्रा). — (L. 4) Kumbh. ed. हरिणः शललाश्चैव (for the prior half).]

— c) B9 T2 [उ]पाहुतं (for °कृतं). ❀ Ca: उपाकृतम्, अभिमन्त्रितम् ॥ Cs: उपाकृतं, विनियुक्तम्, उपयुक्तमिति यावत् । ❀ — d) D7 प्राहुरूपसमन्वितं; G2 पशुरुत्तमसंश्रितं.

23 a) Ś1 एतश्च; K1 एतैश्च; K2. 4 B6. 7. 9 ततश्च (for [illegible]); D7 -ज्ञात-; D4 M7 (*sup. lin.*) -ज्ञातं

एतदेवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा ।
को जातु न विचिन्वीत विद्वान्स्वां शक्तिमात्मनः २३

पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह ।
स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गस्त्वृते मखम् ॥ २४

ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि ।
हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश ॥ २५

ऋचो यजूंषि सामानि यजमानश्च षोडशः ।
अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते ।
अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः ॥ २६

आज्येन पयसा दध्ना शकृतामिक्षया त्वचा ।
वालैः शृङ्गेण पादेन संभवत्येव गौर्मखम् ।
एवं प्रत्येकशः सर्वं यद्यदस्य विधीयते ॥ २७

यज्ञं वहन्ति संभूय सहर्त्विग्भिः सदक्षिणैः ।
संहृत्यैतानि सर्वाणि यज्ञं निर्वर्तयन्त्युत ॥ २८

यज्ञार्थानि हि सृष्टानि यथा वै श्रूयते श्रुतिः ।
एवं पूर्वे पूर्वतराः प्रवृत्ताश्चैव मानवाः ॥ २९

C. 12. 9623
B. 12. 269(a). 30
K. 12. 274. 33

---

(for ॰ज्ञातं). — b) V1 सदा; B7 यथा; D5. 7 तदा (for तथा). — c) V1 के (for को). G1 पिचिह्नीत (sic). ❀ Ca: विचिन्वीत, कर्तव्यतया निश्चिन्वीत । ❀ — d) K1. 3. 4 विद्वान्वा; Da4 विद्वान्स्वं; D8 विदित्वा; G1 विद्वान्स्वान् (for ॰न्स्वां). K7 D3. 9 आत्मना (for ॰नः). D5. 7 विद्वान्स्वां (D5 ॰न्स्व-) शक्तिमाक्षरः; G2 ॰न्स्वाशिषमात्मनः. ❀ Ca: शक्तिं, द्रव्यादिसंपत्तिम् ॥ Cs: स्वां शक्तिं, मयेदं कर्तुं शक्यमिति यावत् । ❀

24 b) K6 ह्यौषधिभिः; K7 G2 M1. 6 चोष॰ (for चौष॰). — c) G2 हि (for [अ]भि-). K7 V1 D3. 5. 7. 9 -कांक्षंति; Ds1 -कांक्षते (for -काङ्क्षन्ते). — d) B6. 7 Dn4 D8 स्वर्गम्; D8 स्वर्गाः (for स्वर्गस्). K6. 7 B3 D3. 9 T1 G1. 3 M1. 7 [ऽ]स्त्यृते; B0 Ds2 D6 स्मृते; B6. 7. 9 Dn4 D3. 5. 7 ऋते; Da3 D8 [ऽ]सृते; Da4 corrupt; Dn1 Ds1 D2 ततो; T2 [ऽ]च ते; G2 [ऽ]स्तु ते; M5. 6 [ऽ]स्त्वृते (for स्त्वृते). K2 मुखं; K6 B0 6-8 Da3. a4 Dn1 D8 D2. 3 5-8 T G1-3 M1. 5. 6 मखात् (D7 T2 ॰घात्; M6 [inf. lin.] ॰खे); Dn4 सुख; M7 मखान् (for मखम्). V1 न च स्वर्गो मखादृते.

25 a) Some MSS. औषध्यः. — b) K4 वीरदाज्यं; Da4 विरुदाज्यं; D3. 6 वीरुदा (D6 ॰धा घं; D8 वीतु॰ दाज्यं; T G3 वीरुदाज्य-; M1. 6 ॰धाज्यं (for ॰दाज्यं). K1 Da4 दधिः. — c) Ś1 K1. 2. 4 बर्हिर् (for हविर्). K1 भूमिं (for भूमिर्). G1 दिशा. G1 मूर्धा; G2 शाका (for श्रद्धा). — d) Da4 द्वादशः.

26 a) K2 यजूषि; Ds1 यजूंसि. K1 समानानि (sic); M7 सत्यानि (for सामानि). K4 ऋचं यजूंषि सामानि. — b) D2 om. from यजमान up to मिति (in 26f). Ds1 यजमानाश्च. V1 B0. 6 8. 9 Da3 Dn1. n4 D8 D3-8 षोडश. T G1-3 M1. 5-7 ऋत्विजश्चापि षोडश. — e) Dn1 D8 अग्निश्चैषो; D5. 7 यज्ञस्थानं; T1 G1 आग्ने॰ चेयो; G2 अग्निश्च यो (for अग्निर्ज्ञेयो). D6 गार्हपतिः; G1 ग्रह॰ (for गृह॰). — d) B9 सं-; T1 G1 lacuna; M7 सु- (for स). — f) K2 T1 यज्ञे; B7 Da2 D3 G2 यज्ञ-; D5. 7 G3 सोमो (for यज्ञो).

27 27abcd = (var.) 12. 255. 37. K6 om. (hapl.) 27a-29b. — b) K2 V1 D6 सकृता (for शकृता). Ś1 K1. 3. 4 [अ]सितया; K7 D3. 9 यकृता; B3 मेदसा; Da4 [आ]मिक्षता; T1 M5 [आ]मीक्षया; M6 [आ]मिषया (for ॰क्षया). Ds1 *या (for त्वचा). — c) K1 B8. 9 Ds2 बालैः; G2 हवैः; M7 पालैः (for वालैः). K2 Da4 शृंगेन; T2 G1. 2 M7 शृंगैश्च (for शृङ्गेण). B8 पादैश्च (for पादेन). — d) B3 (marg.) Da3. a4 Dn4 D8 D2-4. 9 M1. 6-7 संभरति; Dn1 संरभति; D5 lacuna; T2 संभरंति; G2 संगरति; Cp (gloss: संभा॰ वयति, उत्पादयति) संभवति (as in text). Ś1 K1 Bo. 6 (marg.). गो-; Da3 गौ-; T2 गोर् (for गौर्). 7. 9 Da3 D6. 7 T G1-3 M1. 5-7 मुखं (for मखम्). Ś1 K1. 2 स्वर्गं; V1 — e) G2 प्रत्येकतः (for ॰कशः). — f) Ś1 Bo 6. 9 Da3. a4 Dn3 D4 सर्वे (for सर्वं). B3 (marg. as in text) Da4 K1. 2. 7 D3. 9 यद्यज्ञस्य; यद्यद्यस्य; G2 यद्यदन्यद् (for यद्यदस्य).

28 K6 om. 28 (cf. v. l. 27). — a) K7 D3. 9 वदंति; T G1-3 M7 वहति (for वहन्ति). — b) K1. 2 corrupt (for सहर्त्विग्भिः). — c) K1. 7 V1 Bo. 6-9 Da3. a4 Dn1. n3 D8 D2. 3 6 संहृत्य (for संहृत्य). D5. 7 संभूय (for सर्वाणि). — d) D2 G3 निर्वर्तयति; G2 निवृत्तयंति (for निर्वर्त॰).

29 K6 om 29ab (cf. v. l. 27). — a) Ś1 K1. 3. 4 यथार्थानि (for यज्ञा॰). V1 D5. 7 G2 ह; B6. 7. 8 (marg. as in text). 9 Da4 T G1 3 M1. 6. 7 [इ]ह (for हि). G2 दृष्टानि (for सृ॰). — b) K2. 4 यथैव;

C. 12. 9625
B. 12. 269(b). 31
K. 12. 271. 34

न हिनस्ति ह्यारभते नाभिद्रुह्यति किंचन ।
यज्ञो यष्टव्य इत्येव यो यजत्यफलेप्सया ॥ ३०
यज्ञाङ्गान्यपि चैतानि यथोक्तानि नसंशयः ।
विधिना विधियुक्तानि तारयन्ति परस्परम् ॥ ३१
आम्नायमार्षं पश्यामि यस्मिन्वेदाः प्रतिष्ठिताः ।
तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात् ॥ ३२
ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च ।
अनु यज्ञं जगत्सर्वं यज्ञश्चानु जगत्सदा ॥ ३३
ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट् ।
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ॥ ३४
न तस्य त्रिषु लोकेषु परलोकभयं विदुः ।
इति वेदा वदन्तीह सिद्धाश्च परमर्षयः ॥ ३५
ऋचो यजूंषि सामानि स्तोभाश्च विधिचोदिताः ।
यस्मिन्नेतानि सर्वाणि बहिरेव स वै द्विजः ॥ ३६

---

K7 D4.5.7.9 यथैषा; V1 Bo Da3 Dn1.n4 D2.[illegible]6.8 यथार्था; B6–9 Da4 T1 G1.3 यथा हि; D8 M5.7 यथार्षी (Ds1 °र्षीः); T2 G2 यथर्षे (T2 °र्षि); M1.6 यथार्षे (M6 °र्षेः) (for यथा वै). Ś1 K1.2.4 हविः (for श्रुतिः). — c) K6 V1 B6.7.9 Da3.a4 D5.7 T1 G1–3 M5 सर्वे (for पूर्वे). M8 पूततराः (for पूर्व°). K7 Bo.8 (marg.) Dn1 D8 D2.3.6.8 एवं पूर्वतराः सर्वे (D2 °र्वे). — d) K1 प्रवृत्तश्च. K6 B6–9 Da3.a4 [अ]पि हि; T G1–3 M1.6.7 चापि (for चैव).

30 a) K6 हि नास्ति. K7 Ds1 D4.9 माऽलभते; V1 Bo.6–9 Da3.a4 Dn1.n4 Ds2 D2.3.5.6.8 M1.6.7 (also as in text) नार°; D7 T G1.3 M5 ह्याल° (for ह्यार°). G2 न हिंसेत्या*लभेतै. ❀ Ca: न हिनस्तीति । न तु हिंसा तत्र क्रोधफलम् । ❀ — b) T G1.3 M1.6 नापि (for नाभि-). K7 -द्रुह्यंति; D5.7 -द्रुह्येत (for -द्रुह्यति). Ś1 K1.2.4 Ds1 कंचन; D5 T1 G1.3 कश्चन (for किंचन). G2 नास्यविदूयेत किंचन (sic). — c) K6 V1 B3.7.9 D5.7 T G1.3 M1.5–7 यज्ञैर् (for यज्ञो). K6 V1 B9 Da3.a4 T G1.3 M5.7 Cp यष्टव्यम् (for °व्य). B8 Da3.a4 एवं (for एव). B8 (marg.) यज्ञेयष्टव्यमित्येव; G2 यज्ञैरिष्टांगमित्येव. — d) K6 Dn1 T2 G2 योजयति (for यो यजति). K6.7 Da4 Ds1 D4.9 अफलेच्छया (for °प्सया).

31 a) T2 G2 येतानि (sic) (for चैतानि). — b) K6.7 Bo.6.7.8 (marg. as in text).9 Da3 Dn1.n4 D2.3.6 यज्ञोक्तानि; D8 मयो° (for यथो°). K6 Bo.6.7.9 Da3.a4 Dn1.n4 D8 D2.3.6.8 अनुपू(Bo °स)र्वशः; K7 D4.5.7.9 M1.5–7 अत्र सर्वशः; V1 B8 (marg.) अत्र सं(B8 अनुसं)घशः; B8 (orig.) T G1–3 अपि सर्वशः (for नसंशयः). — c) M7 विनियुक्तानि (for विधि°). Ś1 K1.2.4 V1 कर्मणा विधियुक्तेन; G1 विधिना विधिना युक्तस्. — d) K4 वरयंति; K6 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5–8 धार° (for तार°).

32 a) G2 आम्नानम् (for °यम्). D5.7 नाम्नायमार्षं पश्यामि; M7 आम्नायमार्गं प°. — c) K6 B6–9 D[illegible] D5.7 ते; Ds1 T G1–3 M1.5–7 तद् (for तं). [illegible] B6.7.8 (marg. as in text) Da3.a4 D5.7 T G1–3 M[illegible] 5–7 न मुह्यंति (for ऽनुपश्यन्ति). — d) ❀ Ca: ब्राह्मणस्य विधिविधायकवेदभागस्य अनुदर्शनादुपदेशात् । ब्राह्मणजातीयस्य गुरोरिति वा ॥ ❀

33 a) G1 ब्राह्मणः (for °ण-). Ś1 K1.2.4 धर्मो (for यज्ञो). D5.7 ब्राह्मणप्रभवा यज्ञा. — b) B[illegible] Da3.a4 D5.7 ब्राह्मणार्पणमेव च (B7 ह); T2 °णा ब्रह्म एव च; Cp °णार्पण एव च (as in text). — c) D[illegible] अन्न- (for अनु). Da3 ज्ञानं (for यज्ञं). T1 स्वर्गं (for सर्वं). ❀ Ca: अनु यज्ञं, यज्ञनिमित्तम् ॥ Cp: यज्ञं लक्ष्यीकृत्य ॥ Cs: यज्ञाधीनम् । ❀ — d) K7 D[illegible] यज्ञस्य; D5.7 यज्ञांश्च (for यज्ञश्च). B3 (marg. as in text) [अ]नुजगत्तया (for °नु जगत्सदा). K2 यज्ञश्च जगद्स्सदा (sic). ❀ Ca: अनु जगत्, जगन्निमित्तः ॥ ❀

34 a) K1 B9 G3 ब्राह्मणो (for ब्र°). G2 ओमिति ब्राह्मणा नित्यं. ❀ Cs: योनिः आविर्भावस्थानम् । ❀ — b) K4 नुमः; Da4 मनः (for नमः). Ś1 K1 वौषट् (for वषट्). — c) K6.7 D4.9 प्रसज्यंते; D5.7 प्रयुंजीत; D6 प्रयुंज्यंते; M1.6 प्रयुंजंते (for प्रयुज्यन्ते). — d) D5.7 यथैतानि (for यथाशक्ति). D7 कृतानपि (for °न्यपि).

35 b) K7 D4.9 T2 G1–3 परलोके (for °लोक-). K[illegible] M1.6.7 ब्राह्मण्यं विप्रणश्यति. — c) K6 वहंति; [illegible] वदति. Da4 ह (for [इ]ह). — d) K1.2 T G1.[illegible] M1.5–7 वृद्धाश्च; Ds1 सिद्धश्च; G2 हृष्टाश्च (for सिद्धाश्च).

36 b) K6 G1 स्तोमाश्च; Ds1 स्तोत्राश्च; G2 यज्ञाश्च (for स्तोभाश्च). K7 D5.9 विधि(K7 °दि)नोदिताः (for °चोदिताः). ❀ Ca: स्तोभाः गीत्याधारभूतान्यक्षराणि ॥ Cn: सामपूरकाक्षराणि, हाऽऽयि, हाऽऽवु, इत्यादीनि । ❀ — [illegible]) T G1.3 M1.5–7 वाह्यानि; G2 हन्यानि (for

अग्न्याधेये यद्भवति यच्च सोमे सुते द्विज ।
यच्चेतरैर्महायज्ञैर्वेद तद्भगवान्स्वतः ॥ ३७
तस्माद्ब्रह्मन्यजेतैव याजयेच्चाविचारयन् ।
यजतः स्वर्गविधिना प्रेत्य स्वर्गफलं महत् ॥ ३८
नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चयः ।
वेदवादविदश्चैव प्रमाणमुभयं तदा ॥ ३९

C. 12. 9638
B. 12. 269(a).40
K. 12. 274. 43

इति श्रीमहाभारते शान्तिपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

सर्वाणि). — d) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D5 D2. 3. 6. 8 भवंतीह ( Da4 °ति ह ) ( for भवतीह ). K6. 7 द्विज. D5. 7 भवंति स ह वै द्विज.

37 a) K6 अग्न्याद्ययै ( sic ); Da4 Dn1 अग्न्याधे- ( Da4 °ध )ये; G2 अज्ञाधेये ( for अग्न्या° ). D2 भवंति. — b) Ś1 K1. 2. 4 यश्; K7 Bo. 3 तच् ( for यच् ). Ś1 K1. 2 सोम- ( for सोमे ). D5. 7 सुत; M1. 6 सुधे ( for सुते ). K1 V1 Dn4 D6 द्विजः; Dn1 Ds1 D2. 8 द्विजं ( for द्विज ). T1 G1–3 यच्च ( G2 यं च ) सोमे स्थितं जगत्. — c) Ś1 K1. 2. 4 यश् ( for यच् ). K4 D4 चेतरे; Da4 G3 चैतरैर्; G2 च वेदैर् ( for चेतरैर् ). ❀ Cs: महायज्ञैः, अश्वमेधादिभिः पञ्चमहायज्ञैः । ❀ — d) K7 वेदस्; T G1–3 वेदैस् ( for वेद ). K6 Bo. 6 (marg.). 8. 9 Da3. a4 Dn1. n4 D5 D2. 3. 8 पुनः; K7 D4. 9 ततः; B6. 7 प्रभुः; D6 युत; T1 तदा; T2 G1–3 M5 तथा; M1. 6. 7 अपि ( for स्वतः ). D5. 7 वेदवांश्च ततस्ततः.

38 a) B9 D5. 7 T2 Ca ब्रह्म ( for ब्रह्मन् ). K6. 7 Bo. 8–9 Da3. a4 Dn1. n4 D8 D2–9 M1. 5–7 यजेच्च; T2 यजेत ( for य° ). G2 [ए]वं ( for [ए]व ). K1. 4 तस्माद्ब्रह्मण्यजे( K4 °ने )तैव. — b) T2 योजयेच् ( for याज° ). K6 Bo. 6. 8 ( marg. ). 9 Da3. a4 विधारयन्; V1 [अ]पि धारयन्; B7 [अ]विधा°; Dn4 D7 विचा° ( for [अ]वि° ). D2 याजये वापि चारयन्. ❀ Ca ( reading ब्रह्म ): ब्रह्मैव यजेत, ब्रह्मार्पणविधया यजेत । यजमानत्वरत्विजोऽपि ब्रह्मार्पणन्यायेन याजनं कुर्युः । ❀ — c) K6 Bo. 6. 7. 9 Da3. a4 यजते; B3 D8 यजेत ( for यजतः ). K6 B6. 8 ( marg. as in text ). 9 Da3. a4 यज्ञ- प्रेत्य-; V1 Bo Dn4 D2–5. 7. 9 T G1–3 M1. 5–7 यज्ञ- ( for स्वर्ग- ). — d) B3 ( marg. as in text ) यथा ( for प्रेत्य ).

39 a) =( var. ) 6. 26. 31a. G1 यज्ञानां ( for [अ]य° ). — b) D7 परंश्च; G1 परस्य ( for परश्च ). K2 परश्चेत्यविनिश्चयः; G2 परं लोकाश्च निश्चयः. — c) Ds1 -विभिश्च G1–3 M5. 7 वेदा वेद- ( for वेदवाद- ). D9 M1. 6 चैवं ( for चैव ). — d) T1 ( for -विदश्च ). K6. 7 B3. 9 Da3. a4 D7 G1–3 M6 उभये ( for °यं ). T2 G2 M1. 5–7 तथा ( for तदा ). ❀ Ca: उभयं, कर्मकरणं कर्मत्यागश्च । ❀

Colophon. G3 missing: K3. 5 B1–3 Da1. a3 Dn3. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan*: Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D5 D2–9 T G1–3 M1. 5–7 मोक्षधर्म. — *Adhy. name*: Ś1 K1. 2 V1 Bo. 8 D5 D6. 8 गोकापिली( Ś1 K1. 2 °ले )यं; K6 B6. 7. 9 Da3. a4 D2. 9 गोकपिलीयं; K7 D4. 5. 9 गो( K7 om. गो )कापिलीयप्रशंसा; D7 गोकापिलीयसंवादे यागप्रशंसा; G2 कपिलगायत्रीसंवादायोश्रैष्ठ्यं (sic); M5 गोकपिकीये यज्ञप्रशंसा; M6 कपिलगोसंवादे श्रैष्ठ्यकथनं; M7 कपिलगोसंवादे यागश्रैष्ठ्यकथनं. — *Adhy. no.* ( figures, words or both ): K6 B7 M1. 6. 7 93; Dn1 Ds1 D7 T1 G1. 3 Ms 95; Dn4 Ds2 94; D8 89; T2 108; G2 90. Ms 95; Dn4 Ds2 94; D8 89; T2 108; G2 90. — *Śloka no.*: Da4 D8 40; Dn4 41; Ds1 28.

२६१

C. 12. 9636
B. 12. 270(69). 1
K. 12. 275. 1

कपिल उवाच ।

एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः ।
नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ॥ १
निर्द्वंद्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।
विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः ॥ २
अपवर्गेऽथ संत्यागे बुद्धौ च कृतनिश्चयाः ।
ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ॥ ३
विशोका नष्टरजसस्तेषां लोकाः सनातनाः ।
तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ॥ ४

स्यूमरश्मिरुवाच ।

यद्येषा परमा निष्ठा यद्येषा परमा गतिः ।
गृहस्थानव्यपाश्रित्य नाश्रमोऽन्यः प्रवर्तते ॥ ५
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य वर्तन्त इतरेऽऽश्रमाः ॥ ६
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
गार्हस्थ्यमस्य धर्मस्य मूलं यत्किंचिदेजते ॥ ७

## 261

☞ This adhy. is missing in G6 (cf. v. l. 12. 259. 1).

1 $^a$) Ds1 D2. 8 T1 G1 Cn. -पश्यंति; Cp. s -पश्यन्तो (as in text). — $^b$) Ds1 यति- (for यान्ति). T1 मार्गकाः; G1 मार्गिताः (for मार्गगाः). ❀ Cn: मार्गगाः, मार्गे सविशेषावस्थायां स्थिताः ॥ Cp: मार्गगाः सत्पथगामिनः ॥ ❀ — $^c$) K4 D4. 9 तेषां; G2 नेह; M6 नैतां (for नैषां). Ś1 K1. 2. 4. 7 D5. 5. 7. 9 भूतेषु (for लोकेषु). — $^d$) ❀ Cn: व्यतिक्रमः, मिथ्यासंकल्पः ॥ Cp: विगानम् । ❀

2 With 2, cf. 12. 234. 9; 237. 24. — $^a$) B9 निर्द्वंद्वो. K4 निनमस्कारा; D5. 7 निर्मन° (for निर्नम°). ❀ Cn: निर्नमस्काराः न कंचिन्नमस्कुर्वन्ति ॥ Cs: फलेच्छया देवतानमस्कारादिरहिताः । Cv: स्वात्मानं प्रति परैः क्रियमाणनमस्कारावाररहिताः । ❀ — $^b$) K1 निराशीं; K2. 7 G1 °शी- (for °शीर्-). K1 धर्मना; K7 -वचना; Da3 -बंधुना (for -बन्धना). G3 युधाः; M7 शुभाः (for बुधाः). — $^d$) Dn4 [ऽ]मताः (for °लाः).

3 K2. 4 om. 3$^a$–4$^b$. — $^a$) Ś1 K1 अपवर्गेण; B9 °वर्गेत; Da4 D3. 4. 9 M1. 5–7 °वर्गे च; Dn1 G2 °वर्गेषु; D5 °वर्गेथ (for °वर्गेऽथ). K6 V1 B6. 7. 8 (marg. as in text). 9 Da3. a4 D5. 7 Cp संन्यासे; Dn1 [अ]सत्यागे; G3 संत्यागो (for °गे). ❀ Cs: संत्यागे, अपवर्गविरोधिनां कर्मफलानां त्यागे । ❀ — $^b$) Ś1 K1. 6 B6 (marg.). 7 Da4 -निश्रमाः (for -निश्चयाः). — $^c$) Da4 ब्रह्मष्ठा. D5. 7 ये (for च). — $^d$) D2 कृतालयः. ❀ Cp: ब्रह्मण्येव कृतालयाः, न तु गार्हस्थ्यचिन्तापराः । ❀

4 K2. 4 om. 4$^{ab}$ (cf. v. l. 3). — $^a$) Da4 विशोक- (for °का). Da4 -रजसास्. — $^b$) T1 तेषां लोकः सनातनः. — $^c$) T2 परं (for परां). Da4 om. प्राप्य. — $^d$) V1 गार्हस्थं; B0 °स्थे; Da4 D5. 7 °स्थ (for °स्थ्ये).

5 G1 om. the ref. K6 D8 स्युमरश्मिर्; K1 D5. 7 स्यूत°; D6 स्थूत°; D7 स्थूण°; T1 G2. 8 यतिर् (for स्यूमरश्मिर्). — $^a$) T G1–3 एषां (for एषा). B9 om. परमा. K7 Dn1. n4 D2–5. 7–9 काष्ठा (for निष्ठा). — $^b$) D5 T G1. 3 एषां (for एषा). — D5. 7 om. 5$^{cd}$. — $^c$) Ś1 K2 एव चाश्रित्य; T2 क्षमपाश्रित; G1. 3 अनुपा°; G2 न ह्युपा°; M1. 5–7 च व्यपा° (for अव्यपा°). — Ś1 K2. 4 M1. 6. 7 om. (hapl.) 5$^d$–6$^c$. — $^d$) K1 नाश्रमे.

6 With 6, cf. Manu. 3. 77; Vāsiṣṭha Dharmaśāstra 8. 16. Ś1 K2. 4 M1. 6. 7 om. 6$^a$ (cf. v. l. 5). — $^b$) V1 जीवंते सर्वजंतवः. — With 6$^{cd}$, cf. Manu. 3. 77$^{cd}$; 6. 90$^{cd}$. — $^c$) D5 एषां; G3 तथा (for एवं). K6 V1 B0. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 D2. 3. 5–8 T G1–3 M1. 6. 7 गार्हस्थ्यम् (B9 Da4 D2 T2 °स्थम्) (for गृहस्थम्). — $^d$) K4 वर्तते; K7 Ds1 D4. 9 वर्तते (for वर्तन्त). Ś1 K1. 2. 4. 6 B9 Dn1 D8 T G1–3 M1. 5–7 इतराश्रमाः.

7 K1 om. 7$^{ab}$. — $^a$) G1 गृहस्था (for °स्थ). — $^b$) V1 D5. 7 तपते (for तप्यते). — $^c$) K1 गृहस्थस्य; K7 Ds1 गार्हस्थम्; Da4 corrupt; D5. 7 ग्रहस्थस्य (for गार्हस्थ्यम्). D5. 7 तस्य; T1 G1. 3 उक्तं (for अस्य). T G1. 3 M1. 5–7 सर्वस्य (for धर्मस्य). — $^d$) K1 Ś1 K1. 2. 7 Dn1 Cn. p. s किंचन (for किंचिद्).

प्रजनाद्ध्यभिनिर्वृत्ताः सर्वे प्राणभृतो मुने ।
प्रजनं चाप्युतान्यत्र न कथंचन विद्यते ॥ ८
यास्ताः स्युर्बर्हिरोषध्यो बह्वरण्यास्तथा द्विज ।
ओषधिभ्यो बहिर्यस्मात्प्राणी कश्चिन्न विद्यते ।
कस्यैषा वाग्भवेत्सत्या मोक्षो नास्ति गृहादिति ॥ ९

अश्रद्दधानैरप्राज्ञैः सूक्ष्मदर्शनवर्जितैः ।
निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्मभिः ।
श्रमस्योपरमो दृष्टः प्रव्रज्या नाम पण्डितैः ॥ १०
त्रैलोक्यस्यैव हेतुर्हि मर्यादा शाश्वती ध्रुवा ।
ब्राह्मणो नाम भगवाञ्जन्मप्रभृति पूज्यते ॥ ११

C. 12. 9647
B. 12. 270(69).12
K. 12. 275. 12

---

D4. 9 एंगति; V1 B8 Ca (gloss: चलति, व्यवहरति) एजति; B6 (marg.) एधति; D5. 7 एक्षति; T G1-3 M5 एव हि; M1. 6. 7 ईहति; Cn Cap Cs एजते (as in text). ❀ Cn: एजते, यत्किंचित्सुखार्थी चेष्टते । ❀

8 $^a$) K4 पूजनादि-; K6 V1 B6-9 Da3 Dn1. n4 Ds D2. 3. 7. 8 T G2. 3 प्रजनादि-; Da4 प्रजानादि- (for प्रजनाद्धि). K3 Bo अति-; M7 अधि- (for अभि-). G2 -निर्वृत्तं (for °त्ताः). K7 D4-6. 9 M6 प्रजनादभिनिर्वृत्ताः; G1 प्रजानामभि°. — $^b$) K7 B6. 7. 8 (marg. as in text). 9 Da4 D5. 9 सर्वं-; Ds1 सर्वं (for सर्वे). Ś1 K1. 2. 4 Bo Dn1. n4 Ds D2. 3. 6-8 जनाः; G2 मुनेः (for मुने). — $^c$) K6 यजनश्च; Bo T2 G1. 3 प्रजनश्च (for °नं). D7 चाप्युत्त; T1 M1. 7 चाप्यतो; G1. 3 चान्यतो; G2 चापि वो; M5. 6 चाप्युतो (for चाप्युत). — $^d$) D5. 7 तत् (for न). T1 कंचन न; G2 कथं चापि (for कथंचन).

9 K7 om. 9. — $^a$) K1 यास्ताः; V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 यास्तु; D7 T G1-3 M5 यथा (for यास्ताः). K4. 6 Da3. a4 Dn1 D2. 6. 8 G1. 3 M7 Cn बर्हिर्; Ds1 बहुर् (for बर्हिर्). Ds औषध्यो. ❀ Cn (reading बर्हिरोषध्यः): बर्हींषि तृणानि, ओषध्यो धान्यानि, बहिरन्या ओषध्योऽद्रिजाः सोमपूतिकाद्याः । तासां मूलं वृष्ट्यादिर्गार्हस्थ्यमेव । तथा ह्याह—अग्नौ प्रास्ताहुतिः (Manu. 3. 76) ॥ Cp: बर्हिरोषध्यः, यज्ञाद्वर्हिर्भूता अयज्ञीयाः ॥ Cs: ओषधिशब्देनात्र अन्नं विवक्ष्यते । ❀ — $^b$) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2-4. 6. 9 बहिरन्यास्; T G1. 2 M1. 5-7 बहिरन्यस् (for बह्वरण्यास्). Bo Da3 G1. 2 M5. 7 द्विजः; B8 (marg.) Dn1 Ds2 D2. 3. 7 [अ]द्रिजाः; Dn4 Ds1 D6. 8 द्विजाः; T1 G3 [अ]द्रिजः (for द्विज). D5 हिरण्यायास्तथा द्विजः (sic). — $^c$) T2 M7 ओषधीभ्यो. T1 G1-3 ओषधीभ्योप्यबर्हिष्मान् (G1 °हिष्मान्; G2 °र्हिष्यन्). ❀ Cn: ओषधिभ्यः प्राणादिति समानाधिकरणे पञ्चमी । ❀ — $^d$) K6 D3 प्राणान्; Dn1 D3 D2. 3 Cn प्राणात्; D2. 6 प्राणा (for प्राणी). D5 T1 G1. 3 M5 कश्चन (for कश्चिन्न). K6 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6-8 दृश्यते (for विद्यते). — $^e$) G1. 3 तस्य (for कस्य). Da3 वासवेत्; Ds1 वास्तवेत् (for वाग्भ°). K7 सत्यो; G1 सत्यान् (for सत्या). D5 कस्यैषा चाप्युतान्यत्र. — $^f$) B6. 8 (marg. as in text). 9 Da4 [स]स्ति नगृहादिति; Da3 ते नगृहादिति.

10 $^a$) K7 D4 अश्रद्दधानैर्; T1 G3 नश्रद्दधानैर्. K1. 4. 7 T G1. 3 अप्रज्ञैः; G2 अप्रथमैः (hypermetric) (for अप्राज्ञैः). — $^b$) K4 सूक्ष्मादर्शन-; D4. 9 सूक्ष्म° (for सूक्ष्म°). Ds2 -दर्शितैः (for -वर्जितैः). ❀ Cs: यज्ञीया हिंसा न हिंसेति ज्ञानं सूक्ष्मदर्शनम्, तद्वर्जितैः । ❀ — $^c$) K6 Das. a4 Dn1. n4 D2. 7. 8 Cn (gloss: अप्रतिष्ठैः) निरासैर् (for °शैर्). D2 असलैः (for अलसैः). Ś1 K1. 2. 4 चैव (for श्रान्तैस्). K7 D4. 9 T1 G3 अलसैर्निर्धनैः सैर्निरसैरल्पै( D9 °न्यै-; T1 G3 °ज्ञै)स्; D5 अलसैर्निर्धनैः रज्ञैस; T2 M1. 6. 7 अलसैर्निराशैरप्राज्ञैस् (T2 °रल्पज्ञैस्; M7 °रप्रज्ञैस्); G1 अलसैर्निरसैर्यज्ञैर्. — $^d$) G2 तप्यमाने (for °मानैः). — $^e$) K1 शरस्य; K3. 4 V1 Bo. 6. 8 Dn1. n4 Ds D2. 3. 6-8 G2 M1. 6. 7 (*sup. lin.* as in text) शमस्य; B7 समस्य; D4. 9 शमः स (for श्रमस्य). G1 [उ]परतो; G2 °रमैर् (for °रमो). G1 सृष्टः (for दृष्टः). ❀ Ca: श्रमस्य, जन्ममरणप्रबन्धजन्यस्य ॥ Cp: परगृहे भोजनसिद्धेरुपार्जनादिश्रमो नास्तीति । ❀ — $^f$) K3 प्रवृज्या; G1. 2 प्रवृत्त्या (for प्रव्रज्या). K4 पूर्वज्यान्यास- पंडितैः (sic); K6 V1 Bo. 6-9 Dn1. n4 Ds D2. 3. 6-8 Cap प्रव्रज्या( K6 °वर्ज्या )यामपंडितैः; D5 G3 °यां (G3 °ना) च पंडितैः. ❀ Ca: श्रद्धाना वेदवचसि कृताश्वासाः पुनर्गृहस्थस्यापि मोक्षं सुखविषयेच्छन्तीत्यर्थः । नामपण्डितैरिति सोपहासम् । ❀

11 The portion from 11$^a$ up to 57$^f$ is lost in Ś1 on missing fol. — $^a$) K1. 4 V1 M1. 5-7 [ए]व; K3 Da4 [इ]व; K7 D4. 9 [ए]वम् (for [ए]व). K3 हेतुर्वि-; K7 D4. 9 एवं हि; D8 हेतुमिद् (for हेतुर्हि). — $^b$) K4 ध्रुवं; K7 Da4 ध्रुवाः; G1 ध्रुवः (for ध्रुवा). — $^c$) K1. 2. 4 ब्रह्मणो (K4 °णा); D4 ब्राह्मणो (for °णो). Dn1 D8 T2 M1. 5-7 भगवन्; G1 बलवान् (for भग°).

12 Ś1 missing (cf. v. l. 11). — $^a$) G2 स्त्री- (for प्राग्). K2 Dn1 D5 T G1-3 M1. 5-7 गर्भाधान- (for प्राग्). T G1. 3 -मंत्राद्; M1. 6 -मंत्रैर् (for मन्त्रा). °धानात्). T1 G1. 3 द्विजातयः — $^b$) D5 वर्तते (for प्रवर्तन्ते).

C. 12. 9648
B. 12. 270(69). 13
K. 12. 275. 13

प्रागगर्भाधानान्मन्त्रा हि प्रवर्तन्ते द्विजातिषु ।
अविश्रम्भेषु वर्तन्ते विश्रम्भेष्वप्यसंशयम् ॥ १२
दाहः पुनः संश्रयणे संस्थिते पात्रभोजनम् ।
दानं गवां पशूनां वा पिण्डानां चाप्सु मज्जनम् ॥ १३
अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरः स्मृताः ।
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥ १४
एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् ।
ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु ॥ १५
श्रिया विहीनैरलसैः पण्डितैरपलापितम् ।
वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥ १६

---

(for °तिषु). — G2 om. (hapl.) 12ᶜ–15ᵈ. — ᶜ) K1 B7 Dn1 अविस्त्रंभेषु; K2 B8. 9 °स्त्रब्धेषु; K6 M1. 6. 7 °स्त्रंस्तेषु; K7 D4. 9 °श्रस्तेषु; Ds D3. 6 T G1. 3 M5 Ca. p (gloss [both]: जीवत्सु) °श्वस्तेषु; D5 °श्रद्धेषु (for °श्रम्भेषु). B9 D4 om. from वर्तं up to विश्रम्भे (in 12ᵈ). Dn4 वर्तंत. ❀ Ca. s (reading अविश्वस्तेषु): [Ca: अविश्वस्तेषु, जीवत्सु। Cs: कर्मविश्वासहीनेषु संन्यासिष्वपि, वर्तन्ते प्रवर्तन्ते मन्त्राः] ॥ Cn: अविश्रम्भेषु, मानान्तरागम्येषु स्वर्गादिषु। ❀ — ᵈ) K1. 2 B6 विस्त्रब्धेषु; K4 विश्रब्धेषु; K6 विस्त्रस्ते च; K7 D9 विश्रस्तेषु; V1 B0. 7 Dn1 विस्त्रंभेषु; Dn4 D3. 6 T2 G1. 3 M5 Ca. p (gloss [both]: मृतेषु) विश्वस्तेषु; Ds1 विश्रंतेषु; D5 विश्रम्येषु; M1. 6. 7 विस्त्रस्तेषु (for विश्रम्भेषु). Ds D3. 8 [अ]संशयः; T G3 संश्रिताः; G1 संश्रताः (for [अ]संशयम्). ❀ Cn: विश्रम्भेषु ऐहिकेषु वृष्ट्यादिषु साध्येषु। ❀

13 Ś1 missing (cf. v. l. 11). G2 om. 13 (cf. v. l. 12). — ᵃ) K1 दाहाः; Dn1 Ds2 D3 (before corr.). 6 दाहे; T G1. 3 दानं; Cn. p (gloss: अन्त्येष्टिरूपः). s दाहः (as in text). K1. 4 संश्रयेण; K7 °यणं; Ds T G1. 3 Cs (gloss: अस्थिसंचयनं) संग्रहणं; D4. 9 संश्रवणं; D5. 7 °वणे; M1. 5–7 संचयनं; Cn. p संश्रयणे (as in text). ❀ Ca: दाहो मन्त्रवान् अन्त्येष्टिविधया प्रथमः संस्कारः। ततः संश्रयणे सपिण्डने पितृभावः संस्कारसाध्यः। ❀ — ᵇ) K1. 2. 4. 7 D4. 9 T2 संश्रिताः; K6 V1 B0. 6–9 Da3. a4 D5. 7 संश्रितः; Dn1. n4 Ds D2. 3. 6. 8 Cn संश्रिते; T1 G3 संश्रिता; G1 संश्रता (for संस्थिते). K1 पत्रि-; K4 पत्र-; M1. 6 वात्र; M5 चात्र (for पात्र-). Dn1. n4 D2. 3. 6. 8 M6 Cn -भोजने; T2 -भोजनाः (for -भोजनम्). ❀ Cn: देहे पुनः संश्रिते सति पात्रं जलं, भोजनं च, ते उभे तर्पणनित्यश्राद्धादिरूपेण देये ॥ Ca. p: प्रतिवर्षं मृताहनि पात्रभूतानां (Ca °भूतस्य) ब्राह्मणानां (Ca °णस्य) भोजनम्। ❀ — K7 om. 13ᶜᵈ. — ᶜ) Dn1. n4 Ds2 D3. 6. 8 दाने (for दानं). B6. 8 (marg. as in text). 9 Da4 D4. 9 M1. 5–7 च; T G1. 3 हि (for वा). K1. 2. 4 दानं शु( K2 °नं श्व-; K4 °हं शु )नां गवां चैव; D5. 7 Ca दानं गवां शुनां चैव. ❀ Ca: गवामित्युत्तमसंप्रदानलक्षणं, शुनामिति नीचसंप्रदानोपलक्षणम् ॥ Cn: गवां वैतरण्यादीनां, पशूनां वा गोवृषादीनामुत्सर्गः ॥ Cp: दानं गवां, गोभ्यः पिण्डादीनां दानमित्यर्थः। पशूनां छागादिभ्यः। अप्सु वा मज्जनम्। तदुक्तम्—पिण्डास्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा। ❀ — ᵈ) K2 Dn1. n4 अप्सु; K6 Ds1 D2. 4 वाप्सु; D5. 7 च सु- (for चाप्सु). K1 निमज्जनं (hypermetric); Dn1. n4 Ds2 D3. 6 मज्जने; G1 भोजनं (for मज्जनम्).

14 Ś1 missing (cf. v. l. 11). G2 om. 14 (cf. v. l. 12). — ᵃ) K1 अर्चिश्मं( sup. lin. as in text) तो; Da4 °ष्मांतो; Ds1 °ष्मतो; G1 °ष्मदो (for °ष्मन्तो). — ᵇ) K1. 2. 4 D7. 9 क्रव्यादः; K6 काव्यदाः; D2 कव्यादाः (for क्र°). K6 B0. 6. 7. 8 (marg.) Da3. a4 Dn1. n4 Ds D2. 3. 5–8 तथा (for स्मृताः). — ᶜ) T1 G1 भूतस्य (for मृतस्य). K1. 2. 4 उपपद्यंते; K6. 7 D4. 5. 7. 9 अनुवर्तंते (for °मन्यन्ते). — ᵈ) K1. 2. 4 V1 विधि- (for मन्त्रा). Dn1 Ds M5 -मंत्रश्च; T1 मंत्रस्य (for -मन्त्राश्च). ❀ Cs (reading मन्त्रामन्त्रश्च): मन्त्रैरामन्त्रः आमन्त्रणं मांसभक्षणार्थं पितॄणाम् ॥ Cv (reading मन्त्रामन्त्राश्च): मन्त्राः मन्त्रसहितकर्माणि, अमन्त्राः मन्त्रं विना तूष्णीं क्रियमाणकर्माणि, उपवीतस्य सव्यापसव्यकरणादीनि। ❀ ❀ Ca: कारणं, धर्माचरणयोः। ❀

15 Ś1 missing (cf. v. l. 11). G2 om. 15 (cf. v. l. 12). — ᵃ) D7 क्रोशस्तु; G1 क्रोशात् (for क्रोशत्सु). G1 om. सु. D4. 9 G3 M6 देवेषु; D5. 7 सर्वेषु (for वेदेषु). — ᵇ) Ds1 तु (for ऽस्ति). — ᶜ) K1. 2. 4 B0 ऋणमंतो (for °वन्तो). T2 यथा (for यदा). K1. 2. 4 विप्राः; Da4 D6 मर्त्यः (for मर्त्याः).

16 With 16, cf. 12. 10. 20. Ś1 missing (cf. v. l. 11). — ᵃ) G1–3 क्रिया- (for श्रिया). K1. 2. 4 चपलैः (for अलसैः). ❀ Cp: श्रिया विहीनैरलसैरिति विशेषणाभ्यां कर्मासामर्थ्यं सूचितम्। ❀ — ᵇ) M5 पिण्डितैर् (for पण्डितैर्). K4 D4. 9 अपलायितं (D4. 9 °तैः); K6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 संप्रवर्तितं (K7 °तंनं); M7 अल्पलापितान् (for अपलापितम्). T1 G1. 3 पितरो ह्यपलापि( G1 °वि )ताः; T2 पितरो ह्यपलापितान्; G2 पितरो न पलायिताः. ❀ Cp: पण्डितैरिति विशेषणाद्यौक्तित्वं सूचितम् ॥ Cv (reading पण्डि-

न वै पापैर्ह्रियते कृष्यते वा
यो ब्राह्मणो यजते वेदशास्त्रैः ।
ऊर्ध्वं यज्ञः पशुभिः सार्धमेति
संतर्पितस्तर्पयते च कामैः ॥ १७

न वेदानां परिभवान्न शाठ्येन न मायया ।
महत्प्राप्नोति पुरुषो ब्रह्म ब्रह्मणि विन्दति ॥ १८

कपिल उवाच ।

दर्शं च पौर्णमासं च अग्निहोत्रं च धीमताम् ।
चातुर्मास्यानि चैवासंस्तेषु यज्ञः सनातनः ॥ १९

अनारम्भाः सुधृतयः शुचयो ब्रह्मसंश्रिताः ।
ब्रह्मणैव स ते देवांस्तर्पयन्त्यमृतैषिणः ॥ २०

सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।

C. 12. 9657
B. 12. 270(69). 22
K. 12. 273. 22

---

वैश्वपलायितम् ) : चपलायितं चञ्चलीकृतम् । ❀ —[c] ) K1 वेदवादापतिज्ञातं; K2 °परिज्ञातं; V1 Cp ( gloss : अप्रामाणिकत्वं सूचितम् ) °वादपरिज्ञानं; D4. 9 M1. 5–7 वेदादेवापविज्ञानं ( D4. 9 °तं ); T1 G1–3 वेदा (G1 °द·) वेदापवि( G2. 3 °रि )ज्ञानं; T2 वेदा देवाश्च विज्ञानं. —[d] ) D4 lacuna; D5. 7 G3 सत्यभास( D7 °ष )म् ( for सत्या° ).

17 Ś1 missing ( cf. v. l. 11 ). —[a] ) G2 पात्रै (for पापैर्). K6 कृष्यते; D3 T2 M1. 6 ह्रीयते; D5. 7 Cp ( gloss : वशीक्रियते ) क्रियते; T1 G1–3 श्रूयते ( for ह्रियते ). K1. 2. 4 लिप्यते; K6 ह्रियते; K7 D4. 9 दूयते; V1 रिष्यते; T G2. 3 Cs गृह्यते; G1 ग्रहते; Cp ( gloss : धर्ममार्गादाकृष्यते ) कृष्यते ( as in text ). —[b] ) K6 यद्; Ds1 lacuna ( for यो ). B3 वा यजते; M1. 6. 7 नी( M1 नि )यते ( for यजते ). K2 देव- ( for वेद- ). ❀ Ca : वेदशास्त्रैः, वेदैरेव शास्त्रैः । अथ वा वेदैः ऋगादिभिः, शास्त्रैः स्मृतिप्रधानेतिहासमीमांसान्यायादिभिः ॥ Cs : वेदशास्त्रैः, वेदचोदनाभिः । ❀ —[c] ) K1 तूर्ध्वं; D6 ऊर्ध्व- (for ऊर्ध्वं ). K1 Da3. a4 D5. 7 M7 यज्ञात्; K4 यज्ञाः; Dn1. n4 D2. 3. 6. 8 यज्ञैः; T G1–3 M5 यजन्; M1. 6 यज्ञं ( for यज्ञः ). D5 lacuna; D7 सार्धमेभिः ( for °मेति ). —[d] ) K7 D4. 9 स तं पुनस्; V1 न तं पुनस् (for संतर्पितस् ). K7 D4. 5. 7. 9 तर्पयतीह ( for °ते च ). B9 च कामं; M1. 6. 7 न कामं ( M7 °मान् ) ( for च कामैः ). K1. 2. 4 न तं पुरस्त( K4 °स्ता )र्कयते च कामः; T G1–3 M5 ततः पुनस्तात्क्रि( T2 M5 °स्तर्क )यते न कामं.

18 Ś1 missing ( cf. v. l. 11 ). —[a] ) V1 B6. 8 (marg. as in text ). 9 Da3. a4 Cp देवानां ( for वेदानां ). K2 M7 परिभावान् ( for °भवान् ). ❀ Cn : परिभवात्, अनादरात् ॥ Cp : वञ्चनात् ॥ Cs : निन्दनात् । ❀ —[b] ) K1 B9 सा( K1 शा )ध्येन; Ds1 D4. 9 शान्येम ( for शाठ्येन ). G2 माययन् ( for मायया ). K2 न शाठेन म* यया; D5. 7 शाठ्येन न च मायया. —[d] ) B0 Da3 Dn1. n4 D6 ब्रह्मणि ( Dn4 °णे ) ब्रह्म ( by transp. ); D8 D2. 3. 8 M5 Cv ब्राह्मणो ब्रह्म. M1. 6 ब्राह्मण् ( for ब्रह्म ). K2 ब्रह्मण; K4 °नि ( for °णि ). K4 वर्धते ( for विन्दति ). ❀ Cp. s : ब्रह्मणि वेदे साक्षात्प्रतिपादितम् ( Cs : प्रकाशितम् ) ब्रह्म, परमात्मानम् ( Cs : कैवल्यम् ) । ❀

19 Ś1 missing ( cf. v. l. 11 ). T1 G2 om. the ref. —[a] ) K1. 2 दार्शं; K4. 7 Da4 D2. 4. 5. 7. 9 T G1–3 M5 दर्शश् ( for दर्शं ). B6 D5. 7 T G1–3 M5 पौ( T2 G2 M5 पू )र्णमासश्; Ds1 पूर्णमासं; M1. 6. 7 पौर्णमास्यं ( for °मासं ). —[b] ) K2 त्वग्निहोत्रं; D2 अग्निहोत्रे; M5 [अ]प्यग्निहोत्रं ( for अग्नि° ). B0 Da3 Dn1. n4 D2. 3. 6. 8 धीमतः; T G1–3 °ता ( for °ताम् ). —[c] ) K2 चातुर्मासानि. G2 चैवाहं ( for °संस् ). —[d] ) K1. 2. 4 येषु; K7 D4. 9 M7 ( sup. lin. ) एष ( for तेषु ). K4 यज्ञ·; K6 B0. 6–9 Dn1 D2. 3. 5–8 धर्मः; Da3 ब्रह्म·; Da4 Dn4 धर्म·; T1 G1 यज्ञे ( for यज्ञः ).

20 Ś1 missing ( cf. v. l. 11 ). —[a] ) K4 अनारंभे; Da4 आ*रंभा. K2 सुध्यतयः; K4 सुवृत्तयः ( for सुधृतयः ). ❀ Cp : सुधृतयः, शोभना धृतिः बहिर्विक्षेपराहित्यं येषाम् । ❀ —[b] ) K6 V1 B5. 7. 9 Da3. a4 ·संस्थिताः; B0. 8 (marg.) Dn1. n4 D3 D2. 3. 5–8 M1. 6 ·संज्ञिताः; G1 ·संश्रताः ( for ·संश्रिताः ). B3 शुचयो ब्रह्मणि स्थिताः. —[c] ) K7 ब्राह्मणा. K1. 2 स ( for स ). Ds2 तान् ( for ते ). Dn1 Ds1 D4 देवास् ( for देवांस् ). T G1–3 M5 ब्रा( T1 G3 ब्र )ह्मणा एव तान्देवांस्. —[d] ) D5. 7 तर्पयति. K1. 2. 4 Cp ( Cpp as in text ) अमृतैरपि; K7 D4. 9 T G1–3 M5 Ca °रिव; D3 मनीषिणः ( for [अ]मृतै° ). ❀ Cp : अमृतैषिणः, अविनश्वरफलार्थिनः । ❀

21 = ( var. ) 12. 231. 23; 254. 32 : B. 13. 113. 7. Quoted in Śaṁkara's Br. Sū. Bhāṣya under iv. 2. 14. Ś1 missing ( cf. v. l. 11 ). D5 om. ( hapl. ) 21. —[b] ) T2 G2 M5 सर्वं; M1. 6. 7 सम्यग् ( for सर्व- ). T G1–3 M5 ज्ञानेन ( for ·भूतानि ). D4 पश्यति ( for °तः ). —[c] ) K1. 2. 4 हि ( for [अ]पि ). ❀ Ca : इवार्थे अपिशब्दः । ❀ —[d] ) K1. 2 चापदस्य; T1 G1–3 M5 ह्यपदस्य ( for अ° ). ❀ Cp : अपदस्य त्यक्तमिथ्यावलम्बस्य, पदैषिणः परमुपाद्यपदस्य [ पुंसः ] ॥ Cv : अपदस्य लौकिक

C. 12. 9657
B. 12. 270(69). 22
K. 12. 275. 22

देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २१

चतुर्द्वारं पुरुषं चतुर्मुखं
चतुर्धा चैनमुपयाति निन्दा ।
बाहुभ्यां वाच उदरादुपस्था-
त्तेषां द्वारं द्वारपालो बुभूषेत् ॥ २२

नाक्षैर्दीव्येन्नाददीतान्यवित्तं
न वायोनीयस्य शृतं प्रगृह्णेत् ।
क्रुद्धो न चैव प्रहरेत धीमां-
स्तथास्य तत्पाणिपादं सुगुप्तम् ॥ २३

नाक्रोशमर्छेन्न मृषा वदेच्च
न पैशुनं जनवादं च कुर्यात् ।
सत्यव्रतो मितभाषोऽप्रमत्त-
स्तथास्य वाग्द्वारमथो सुगुप्तम् ॥ २४

नानाशनः स्यान्न महाशनः स्या-

---

स्थानाशारहितस्य, पदैषिणः मुक्तिपदैषिणः । ❀

22 Ś1 missing (cf. v. l. 11). — [a]) G2 om. चतु. K1. 2. 4 हि पुरं; K6 पुरुषं च; G2 परं* (for पुरुषं). K4 तु चतुर्मुखं (for चतुर्मुखं). ❀ Ca. p: चतुर्द्वारं, चत्वारि बाहुवदनोदरोपस्था (Cp: °पस्थरूपाणि द्वाराणि) द्वारमिवानर्थस्य । ❀ — [b]) D5. 7 चतुर्थाश्च (for °र्धा). T G1 M5 चतुर्मुखे(G1 °खो)नैनम्; G2. 3 °मुखेनैवम्; M1. 6. 7 °मूर्धैवैनम् (for °र्धा चैनम्). K1 एतम्; K2. 4 एनम्; K7 D4. 9 एवैनम् (for चैनम्). K1 Da4 D5. 7. 9 M1 उपयांति (for °याति). K6 B6. 7–9 बाधा; B0. 8. 9 (last two marg.) Da3. a4 Dn1. n4 D8 D2. 3. 8 वाचा; D5. 7 G3 नित्यं; D6 चैव; M1. 6 निष्ठां; M7 निष्ठा (for निन्दा). Kumbh. ed. चतुर्मुखो नैनमुपैति निंदा. ❀ Cn: चतुर्धा विराट्सूत्रान्तर्यामिशुद्धरूपेण । ❀ — [c]) K1 वच; K6 Ds2 D6 वाचम्; D5 चानु; T1 G1. 2 M1. 5. 6 चैवम्; T2 G3 चैनम् (for वाच). K4. 6 Ds1 उदाराद् (for उद°). D5. 7 उपास्यते (for उपस्थात्). M7 वाशव्या तुभ्यामुपरामुदस्था (sic). ❀ Cs: उदरादुपस्थादिति तृतीयार्थे पञ्चमी । ❀ — [d]) K6 तेषां द्वारैर्; T1 वाचैवैतद्; T2 M5 वाचा चैव; G1–3 वाचैव; M1. 6 तेषां च द्वारं (for तेषां द्वारं). K4 द्वारपाले (for °पालो). D5. 7 तेषां द्वारं द्वारपालैः सुगुप्तं. ❀ Cp: बुभूषेत संवृणुयात् । ❀

23 Ś1 missing (cf. v. l. 11). — [a]) K4 माक्षं; K6 नाक्षौ (for नाक्षैर्). K2 देवीन्; K4 दैव्या; K6 देव्येन्; K7 G1 दिव्यैर्; B7 दीव्येर्; B9 M7 दीव्यैर्; Ds1 दिव्येन् (for दीव्येन्). K1. 2 नाददेत; G2 °धीत (for °दीत). G2 om. from न्यवित्तं up to भाषो (in 24[c]). K6 [अ]ज्यवित्तं; D3 [अ]न्यवृत्तं; D5. 7 [अ]थ वित्तं; G1 [अ]न्यवित्ता (for °वित्तं). — [b]) K1. 2. 6. 7 V1 B6. 8. 9 Da4 Ds2 D8. 9 च (for वा). K2 [अ]प्यग्नीयस्य; Da3. a4 [अ]योनियस्य; Cv °निजस्य (for °नीयस्य). K1. 2 B6. 8. 9 स्रुवं; K6 V1 Da4 Ds1 Cs श्रुवं; K7 B0. 7 Ds2 D2–4. 6. 9 श्रुतं; ... सुता (for शृतं). K1. 2. 4 V1 प्रगृह्येत्; B0 °ह्णीयात्; Dn1 Ds2 D2. 3 Cn प्रगृह्णात्; Dn4 D8 °ह्णन्; Ds1 °ह्णान् (for °ह्णेत्). D5. 7 न (D5 om.) गृह्णीयाद्धीनयोनेः श्रुतं च; T G1. 3 M1 ना(T1 G3 न-; G1 [अ]न्य)योनिजस्येह ध्रु(T2 M1 स्रु)वं प्रगृह्णेत्; M1. 6 नायोनिजस्यैव स्रुवं प्रगृह्णेत्; M1 न योनिहीनस्येह ध्रुवं प्रगृह्णेत्. ❀ Cn: शृतं, हविः प्रगृह्णात्, प्रतिगृह्णीयात् । पञ्चमलकारोऽयम् ॥ Cs (reading श्रुवं): हीनजन्मानं न याजयेदित्यर्थः । ❀ — [c]) B9 [s]पि (for न). K1. 2 चेह; K6 B6 D5. 7 T G1. 3 M1. 5. 6 [ए]व; K7 D9 चैवं; B9 नैव (for चैव). K6 प्रहरेद् (for °रेत). K6 V1 B6–9 Da4 D5. 7 T G1. 3 M1. 5–7 विद्वांस् (for धीमांस्). — [d]) B0 तस्यास्य (for तथास्य). K1 Da4 D9 [अ]स्य स्यात्; B6 चास्य; B9 D5. 7 ह्यस्य; D4 [अ]स्य सत्; T1 G1. 3 तस्य (for [अ]स्य तत्). D4 पाणिपदे; T G1. 3 पाणि(G1 °ण्य)द्वारं (for °पादं). K4 सुतप्तं (for सुगुप्तम्). K6 तथा ह्यस्य स्यात्पाणिपादं प्रगुप्तं. ❀ Cp: पाणिपादमित्युक्तेः पादगुप्तिरपि कुत्सितदेशगमननिवृत्त्या विवक्षिता । ❀

24 Ś1 missing (cf. v. l. 11). G2 om. up to भाषो (cf. v. l. 23). K7 om. (hapl.) 24. — [a]) K6 B3. 7. 8 (marg. as in text). 9 Da3. a4 ना(K6 न)क्रोधम्; T2 lacuna (for नाक्रोशम्). K4 D3. 5. 9 आच्छें(D3 °छें)न्; B6 (marg.) T1 G1. 3 M1. 5–7 इच्छेन्; B9 अर्हेन्; Dn1. n4 D8 D2 T2 ऋच्छेन्; D8 ऋर्छेन् (for अर्छेन्). B0. 8 (marg.) Dn1 Ds2 D3. 5–7 वृथा (for मृषा). ❀ Cp (reading न क्रोधमर्छेत्): क्रोधपूर्वं न वदेदित्यर्थः । ❀ — [b]) D8 पेशुनं; M6 पैशुन्यं (for पैशुनं). K1. 2. 4 परवादं; Da3. a4 नानु° (for जन°). T1 G1. 3 M1. 6. 7 न (for च). ❀ Cp: जनवादं जनैः सह ग्राम्यकथाम् । ❀ — [c]) T1 G1 तस्यै (for सत्य°). T1 -वृत्तम्; G3 -व्रतम् (for -व्रतो). T G1. 3 [अ]मितभाषी; M1. 6 मितभाषे (for °भाषो). G2 [s]प्रमत्तास् — [d]) M1 तथास्यो (for °स्य). D5. 7 तथास्य वाग्जातमथो सुगुप्तं.

दलोलुपः साधुभिरागतः स्यात् ।
यात्रार्थमाहारमिहाददीत
तथास्य स्याज्जाठरी द्वारगुप्तिः ॥ २५
न वीरपत्नीं विहरेत नारीं
न चापि नारीमनृतावाह्वयीत ।
भार्याव्रतं ह्यात्मनि धारयीत
तथास्योपस्थद्वारगुप्तिर्भवेत ॥ २६
द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः ।
उपस्थमुदरं बाहू वाक्चतुर्थी स वै द्विजः ॥ २७
मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥ २८
अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ॥ २९
द्वंद्वारामेषु सर्वेषु य एको रमते मुनिः ।
परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥ ३०
येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।

C. 12. 9667
B. 12. 270(69).32
K. 12. 275. 32

---

25 Ś$_1$ missing ( cf. v. l. 11 ). — $^a$ ) K$_4$ नामा-मनः; T$_2$ नानाशनाः ( for °शनः ). — $^b$ ) K$_{1.2}$ नलोलुपः ( for अलो° ). K$_{1.2.4.7}$ D$_{4.9}$ साधुरिहागतः; V$_1$ °भिः संगतः; T G$_{1.3}$ M$_{1.5-7}$ °रनागसः; Cp साधु निरागसः ( for साधुभिरागतः ). G$_2$ अलोलुपः सादरनागसः स्यात्. — D$_4$ reads 25$^c$–26$^b$ twice. — $^c$ ) K$_6$ V$_1$ B$_{5.8}$ Da$_4$ D$_{5.7}$ अथाददीत; B$_9$ उपा°; D$_6$ इहाददान ( for °ददीत ). — $^d$ ) M$_7$ तदा ( for तथा ). D$_{5.7}$ ततस्तस्या ( for तथास्य स्याज् ). K$_{1.2.4.7}$ D$_9$ M$_{1.6}$ सा; T$_1$ G$_{1-3}$ तज्; M$_7$ स्यां ( for स्याज् ). Ds$_1$ जागरी; D$_4$ ( both times ) जावरी; T G$_{1-3}$ M$_{5-7}$ जठर-; M$_1$ जठरे ( for जाठरी ). K$_1$ द्वारातप्तिः; G$_2$ -द्वारगुप्तं ( for द्वारगुप्तिः ).

26 Ś$_1$ missing ( cf. v. l. 11 ). For the repetition in D$_4$, cf. v. l. 25. — $^a$ ) Da$_4$ -पत्नी ( for -पत्नीं ). ❀ Cn: हे वीर, युधिष्ठिर(!) । पत्नीं यज्ञसंबन्धवर्तीं नारीं न विहरेत, न विभजेत, तदुपरि स्त्र्यन्तरकरणेन धर्मार्थकामेषु तां विभागवतीं न कुर्यात् ॥ Cp: वीरपत्नीमन्यपूर्वां न विवहेत्, न परिगृह्णीयात् । ❀ — $^b$ ) T G$_{1.3}$ M$_5$ चैव ( M$_5$ चापि ) भार्याम् ( for चापि नारीम् ). K$_1$ D$_6$ अनृता; K$_2$ °तं; K$_6$ °ते; Da$_1$ D$_8$ अमृताव्; D$_4$ ( both times ).$_7$ अनृताम् ( for अनृताव् ). K$_{1.4}$ च ( K$_4$ चा- ) ह्वयेत; K$_6$ B$_{8.9}$ Da$_{3.4}$ D$_6$ चाह्वयीत; K$_7$ D$_4$ ( both times ).$_9$ T G$_{1.3}$ M$_5$ आह्वयेत ( K$_7$ °ति ); B$_7$ चाभूयीत ( for आह्व° ). G$_2$ तद्वेद भार्यामनृतावाह्वयेत. — $^c$ ) K$_{1.2}$ D$_5$ व्रतस्य; T$_1$ -व्रत्तं हि; G$_2$ -वृत्तं हि ( for -व्रतं हि ). K$_6$ V$_1$ B$_{8.9}$ Da$_4$ चात्मनि; D$_8$ ह्यात्मना ( for °नि ). K$_{1.2.7}$ B$_6$ ( marg. as in text ).$_7$ Da$_1$ D$_{4.9}$ T G$_{1-3}$ M$_5$ धारयेत ( B$_6$ °त् ); D$_{5.7}$ °रयेत्तथा ( D$_7$ om. तथा ) ( for °यीत ). ❀ Cn: भार्याव्रतं, परस्त्रीवर्जनम् । ❀ — $^d$ ) Da$_4$ [अ]स्योपस्था-; T$_1$ G$_3$ तस्योपस्थ- ( for [अ]स्यो° ). G$_2$ -द्वाम- ( for -द्वार- ). K$_7$ D$_{4.9}$ भवेत्; Da$_3$ D$_6$ भवेत् ( for भवेत ). D$_{5.7}$ यथास्योपस्थ( D$_7$ यथा तस्योपस्थ )द्वारगुप्तिं समेति.

27 = ( var. ) B. 12. 300[ 299 ]. 28. Ś$_1$ missing ( cf. v. l. 11 ). — $^a$ ) M$_5$ चत्वारि ( for द्वाराणि ). D$_{5.7}$ चास्य ( for यस्य ). K$_{1.2.4}$ गुप्तानि; M$_5$ द्वाराणि ( for सर्वाणि ). — $^b$ ) K$_{1.2.4}$ सर्वानि ( K$_2$ °णि ) हि ( for सुगुप्तानि ). — Da$_{3,a4}$ om. 27$^{cd}$. — $^c$ ) K$_{1.2}$ पादं; T$_2$ G$_{1.2}$ M$_5$ पाणिद्; M$_{1.6.7}$ पाणी ( for बाहू ). — $^d$ ) K$_6$ V$_1$ B$_{0.6-9}$ च स; Dn$_1$ n$_4$ D$_8$ D$_{2.6.8}$ भवेद्; T$_2$ G$_2$ च वै ( for स वै ). K$_{4.7}$ B$_8$ Dn$_1$ n$_4$ Ds$_2$ D$_{2-6.8.9}$ T$_2$ द्विज ( for द्विजः ). ❀ Cp: स वै द्विजः, कर्माण्यकृत्वापि । गुप्त्यभावे कर्मणां कृतानामपि वैयर्थ्यम् । ❀

28 Ś$_1$ missing ( cf. v. l. 11 ). — $^a$ ) K$_7$ यो यान्यस्य याति; D$_{4.9}$ यो यानि; D$_9$ ( marg. sec. m. ) यान्यस्य. — $^b$ ) K$_2$ ( for मोघानि ). D$_{5.7}$ मोहादगुप्तद्वारस्य. — $^c$ ) D$_6$ तपसः ( for °सा ). — $^d$ ) सर्वानि ( for °णि ). K$_6$ B$_{8.7.9}$ दारेण; Da$_4$ द्वारेण ( for यज्ञेन ). K$_2$ अज्ञेन; K$_{1.2.4}$ आयुषा ( for आत्मना ).

29 Ś$_1$ missing ( cf. v. l. 11 ). — $^b$ ) K$_{1.2.4}$ G$_1$ अनुपस्तीर्य- ( for °स्तीर्ण- ). K$_2$ -शायितं; D$_5$ -साधनं ( for -शायिनम् ). — $^c$ ) K$_1$ D$_7$ बहूपधानं; K$_2$ बाहु-पदानं ( for °पधानं ). K$_7$ साम्यंतं ( for शाम्यन्तं ). T$_1$ G$_{1-3}$ बाहूपशायिनं शांतं. — $^d$ ) K$_2$ ब्रह्मणं ( for ब्रा° ). — After 29, K$_6$ reads 32.

30 Ś$_1$ missing ( cf. v. l. 11 ). K$_{3.4}$ om. ( hapl. ) 30. — $^a$ ) K$_1$ द्वारारामेषु; G$_2$ द्वंद्व° ( for द्वंद्वा° ). ❀ Ca: द्वंद्वारामेषु, सुखदुःखादौ बद्धरतिषु संसारिषु मध्ये ॥ Cs: सहायरतेषु । ❀ — $^b$ ) Cp: शीतोष्णादौ बद्धरतिषु ॥ K$_1$ वसते D$_{5.7}$ य एवं; G$_2$ यल्लोको ( for य एको ). V$_1$ B$_{8-9}$ Da$_{3,a4}$ बुधः ( for मुनिः ). ( for रमते ). B$_8$ अनुप°; M$_{1.6}$ अनव- — $^c$ ) K$_7$ D$_{4.9}$ अनभि°; K$_7$ D$_9$ -ध्यायस ( for -ध्यायंस ). ( for अनन° ).

C. 12. 9667
B. 12. 270(69). 32
K. 12. 275. 32

गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥ ३१

अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ॥ ३२

नान्तरेणानुजानन्ति वेदानां यत्क्रियाफलम् ।
अनुज्ञाय च तत्सर्वमन्यद्रोचयतेऽफलम् ॥ ३३

फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।
विगुणानि च पश्यन्ति तथानैकान्तिकानि च ॥ ३४

गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चापि सुदुष्कराः ।
अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥ ३५

स्यूमरश्मिरुवाच ।

यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा ।
तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥ ३६

---

31 Ś1 missing (cf. v. l. 11). K1 om. (hapl.) 31–32. D7 transp. 31 and 32. — $^{a}$) G1 एन (for येन). K2 G1 बद्धं; B9 सर्वं; Da4 युद्धं; D5. 7 विश्वं (for बुद्धं). — $^{b}$) K7 प्रकृति-; Da4 प्रवृत्ति-; D7 प्रकृतिं (for °तिर्). Ds1 याः; D5. 7 यः (for या). ❀ Cp: प्रकृतिर्ब्रह्ममात्रम्, विकृतिर्मायाहेतुकं द्वैतजातम् । ❀ — $^{c}$) K2 गतिज्ञं; K6 मतिज्ञः; M5 गतिश्च (for °ज्ञः).

32 Ś1 missing (cf. v. l. 11). K1 om. 32 (cf. v. l. 31). K2, 4 om. (hapl.) 32. K6 reads 32 after 29. D7 transp. 31 and 32. With $32^{ab}$, cf. 12. 21. $4^{ab}$; 168. $42^{ab}$; B. 12. 326. $33^{ab}$; 12 App. I (No. 4), line 27; Harivaṁśa 1. 30. $41^{ab}$. — $^{a}$) B0 Ds2 D3 अभयः (for °यं). B8 (marg.) यस्य (for सर्व-). K7 D4. 5. 7. 9 M7 अभयं यस्य सर्वेभ्यः. — $^{b}$) Da3. a4 कुतः (for यतः). — $^{c}$) K7 यं (for यस्).

33 Ś1 missing (cf. v. l. 11). Before 33, V1 B0. 6–9 Da4 D6 Cp ins. कपिल उवाच. — $^{a}$) D5 मांतरे न. T G1. 3 M5. 7 -जानाति (for -जानन्ति). — $^{b}$) K2, 4 G2, 3 देवानां (for वेदानां). K6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 Cp. s दान(V1 वेद)-यज्ञ- (for वेदानां यत्). T G1–3 M1. 5–7 यः; B8 (marg.) तु (for यत्). M7 Cp. s क्रियाः (for क्रिया-). ❀ Ca: वेदानामिति वेदानित्यर्थे, छान्दसत्वात् । कर्मणो वेदान्विना क्रियाफलमपि न जानन्तीति अवश्यं वेदः सर्वैः प्रमाणतया अभ्युपगम्यः । ❀ — K7 om. (hapl.) $33^{cd}$; V1 reads the same on marg. — $^{c}$) Dn1. n4 Ds D2–4. 6. 8. 9 अविज्ञाय (for अनु°). V1 अननुज्ञाय तत्सर्वम्. — $^{d}$) Dn1 दोहयते (for रोचयते). ❀ Ca: मुमुक्षुः पुनः तत्सर्वमभ्यनुज्ञायापि अफलमेवाखिलं कर्म रोचते, ब्रह्मार्पणधिया ॥ Cp: यद्यपि पूर्वकाण्डे फलमन्तरेण दानयज्ञक्रियाः नानुजानन्ति तथापि तत् फलरागिणं प्रत्यनुज्ञाय उत्तरकाण्डे फलमन्तरेण तेषामेव दानादीनां अन्यत्फलं विविदिषाख्यं रोचयते । ❀ — After 33, K1, 2, 4, 6, 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1. 3 Ca. p. v editions read for the first time 12. 262. $16^{c}$–$18^{b}$ (K7 D4. 9 $16^{c}$–$17^{d}$), repeating the same in proper place.

34 Ś1 missing (cf. v. l. 11). — $^{b}$) K7 D4. 5. 7. 9 पुष्टिमं(D7 °वं)ति (for व्युष्टि°). T2 G1 M5–7 Ca [अ]ध्रुवाणि; Cp (gloss: बहुकालव्यवस्थापिफलहेतुत्वात्) ध्रुवाणि (as in text). Da4 व्युच्छितं निष्कवाणि च (sic). ❀ Ca: व्युष्टिमन्ति, ब्रह्मलोकादिप्राप्त्या ॥ Cn: व्युष्टिः पारमैश्वर्यं, तद्वन्ति ॥ Cp: व्युष्टिमन्ति वैदिकत्वाद्बुद्धिजनकानि ॥ Cs: व्युष्टिमन्ति, परिणामवन्ति ॥ Cv: व्युष्टिः विभागः, तद्वान्ति । ❀ — $^{c}$) K1 निगुणानि; K7 D4. 5. 7. 9 निर्गु°; Ds1 विगृ°; G2 विपु° (for विगु°). ❀ Cp: विगुणानि, हिंसाबहुलतया दोषवन्ति ॥ Cs: विगुणानि, अन्यूनानतिरिक्ततया कर्तुमशक्यानि । ❀ — $^{d}$) B3 न (for च). K1. 2. 4 D8 D4. 9 T G1 M1. 5. 6 तथाने(D8 D9 T1 G1 °नै)कानि केचन (K2. 4 T1 G1 केन च); G2 तथा सत्राणि केचन; G3 तथा नैकानि केनचित्. — After 34, K7 D4. 9 read 12. 262. $18^{ab}$, for the first time, repeating it in its proper place.

35 Ś1 missing (cf. v. l. 11). — $^{a}$) K6 चात्र (for. चात्र). T G1–3 M1. 6. 7 तु; M5 हि (for सु-). K1 सुदज्ञेया (sic); K7 सदुर्ज्ञेयो. ❀ Ca: गुणाः, यजमानस्य ऋत्विजां च मनःशुद्ध्यादयः । ❀ — $^{b}$) K6 B0. 6–9 Da3. a4 ज्ञातारोत्र; V1 °रोपि; Dn1. n4 D8 D2. 8. 9 °श्चात्र; D5. 7 M1. 6. 7 °रश्च; G2 ज्ञाता*पि (for ज्ञाताश्चापि). K1 सुदुष्करः; D5. 7 सुदुष्करं; M7 °ष्कंभाः. D6 ज्ञातारश्चात्र दुष्कराः. — $^{d}$) B6 (marg. as in text) 7. 8 (marg. as in text) Da3. a4 T G1–3 M1. 5–7 अपि (for अनु-). K6 Da4 -पश्यति (for °सि).

36 Ś1 missing (cf. v. l. 11). K7 D4. 9 om. (hapl.) 36–37. G1. 2 om. the ref. K6 B9 स्युमरश्मिर्; D5 स्थूम°; D7 स्थूण°; M7 स्यूमरमी (for °रश्मिर्). — $^{a}$) K6 तथा (for यथा). Da4 -प्रामाण्यंस्. K1. 2 यथा प्रमाणं (K1 om. णं) वेदाश्च; T1 G1–3 यथा च देव(T1 वेद)ब्राह्मण्यम्. — $^{b}$) Da4 त्यागस्य; D5 त्यागस्य; D7 न्यायश्च (for त्यागश्च). K1. 2 T1 M1. 5–7 सकलो; K4 सफले (for °लो). T1 G1–3

कपिल उवाच ।

प्रत्यक्षमिह पश्यन्तिं भवन्तः सत्पथे स्थिताः ।
प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ॥ ३७

स्यूमरश्मिरुवाच ।

स्यूमरश्मिरहं ब्रह्मञ्जिज्ञासार्थमिहागतः ।
श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया ।
इमं च संशयं घोरं भगवान्प्रब्रवीतु मे ॥ ३८

प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः ।
किमत्र प्रत्यक्षतमं भवन्तो यदुपासते ।
अन्यत्र तर्कशास्त्रेभ्य आगमाच्च यथागमम् ॥ ३९

आगमो वेदवादस्तु तर्कशास्त्राणि चागमः ।
यथागममुपासीत आगमस्तत्र सिध्यति ।
सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥ ४०

C. 12. 9580
S. 12. 270(69). 45
K 12. 278. 45

नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना ।

---

त्यागश्च कलौ यथा. —c) K6 B6.9 Da4 D3 (by corr. as in text) व्यक्तं; M1.6.7 तावद् (for व्यक्तौ). —d) K1 भगवांस्; G1 उभयं. M1 तां (for तद्). D8 ब्रवीमि; T G1–3 वदस्व (for ब्रवीहि). D8 ते (for मे).

37 Ś1 missing (cf. v. l. 11). K7 D4.9 om. 37 (cf. v. l. 36). T G1 om. the ref. —a) B6.7.8 (marg. as in text).9 Da4 अपि; Ds1 T G1.3 M1.5–7 इव; G2 एव (for इह). K1.2.4 पश्यामि; D5.7 T G1–3 M1.5–7 पश्यंतो (for °ति). —b) K1.2.4 शाश्वते (K2 °ती) (for भवन्तः). K2 सत्परः; B6.7.9 Cp (gloss: कर्ममार्गे) स्वपथे; Da3.a4 सुप्र(Da4 °प)थे; M1.6 सत्पथि; M7 सत्वति (for सत्पथे). K1.2 स्थितः. ❀ C8: सत्पथे स्थिताः, त्यागपथमसत्पथं पश्यन्त इव कर्मपथे स्थिता इत्यर्थः। ❀ — After 37ab, M1.6.7 read 39cd for the first time, repeating it in its proper place. G1.3 M5 om. (hapl.) 37c–39b. M1.6.7 om. (hapl.) 37cd. —c) V1 प्रत्यक्षं च; T1 °क्षकं (for °क्षं तु). B6.9 Da3.a4 अत्रास्ते; D6 अत्रापि (for °स्ति). G2 प्रत्यगेकं यदत्रास्ति. —d) Ds1 यदा (for यद्). G2 वदंत (for भवन्त).

38 Ś1 missing (cf. v. l. 11). G1.3 M5 om. 38 (cf. v. l. 37). T G2 M1 om. the ref. K6 B9 Ds1 D8 स्युमरश्मिर्; K7 D9 स्यूत°; D5 स्थूम°; D7 स्थूण° (for स्यूम°). V1 reads 38a–39b on marg. —a) K1.6 B9 Ds1 स्यु(K1 सू)मरश्मिर्; K7 D9 स्यूत°; Da3 स्यूमरश्मिम्; D5 स्थूमरश्मिर्; D7 स्थूण° (for स्यूम°). T M7 विद्वन्; G2 विद्वान् (for ब्रह्मन्). —b) G2 [आ]त्मनः (for [आ]गतः). ❀ Cn. 8: इहागतः, गवि प्रविष्टः। ❀ —c) Da4 श्रेयस्कामे; D5.7 °स्कामं; G2 श्रीयस्कामः. G2 M6 प्रत्यवोचन् (for °वोचम्). —d) Da4 विवक्षुयात्; Ds1 °क्षतो (for °क्षया). B6.8 M7 आर्जवात्तु(B6 [marg. as in text])-विवक्षया; G2 मा जही न विवत्सया. ❀ Cn: विवक्षया, स्वपक्षनिर्वाहेच्छया। वहतेरिदं रूपम्। न प्रातिभट्येनेत्यर्थः ॥ C8: न विवक्षया, विवादेच्छया। ❀ —e) G2 मलं (for इमं). K1.2.4 तु; D5 स (for च). K7 D4.9 सशिवं; G2 संश्रयं (for संशयं). —f) Da4 प्रभृवितु (sic) (for प्रब्रवीतु).

39 Ś1 missing (cf. v. l. 11). G1.3 M5 om. 39ab (cf. v. l. 37). V1 reads 39abcd on marg. —a) Ds1 T G2 M1.6 इव (for इह). —b) K7 D4.9 M1.6.7 सत्पथि (for °थे). — M1.6.7 read 39cd for the first time after 37ab. —c) K7 प्रत्यक्षकृतं; Ds1 °क्षं**; D6 M5 °क्षमतं (D6 °तमे) (for °क्षतमं). —d) K7 भवतो यद्; B0.8 (marg.) D6 भगवान्यद्; T G1–3 M1 (both times).5.6.7 (last two both times) भगवंत (G2.3 °तम्) (for भवन्तो यद्). K1.2 [s]न्यद्; K4 [s]न्ये; Ds1 D2 यम् (for यद्). K6 B6–9 Da3.a4 D5.7 दृश्यत्यागमनिश्चयात् (B6 °नुत्तमात्; V1 Da3.a4 °निश्चयः). —e) K1.2.7 D4.9 तत्त्व-; D5.7 Cp T1 G1.3 धर्म-; B6 (marg. as in text) (Cpp as in text) तंत्र-; G2 कर्म- (for तर्क-). —f) G1 B0 Dn1.n4 D8 D2.3.6.8 आगमार्थं; D5.7 °मश्च; T G2.3 यथा °माश्च (for °माच्च). D5.7 यथागतः; T G2.3 यथा मम; G1 यथाक्रमं (for °गमम्).

40 Ś1 missing (cf. v. l. 11). —a) K2 देव- (for वेद-). K1.2.4 -शास्त्रं; K6 Da3 Dn4 Ds2 D3.8 M1 -वादास्; D7 -मार्गस् (for -वादस्). —b) K2 देव-; K4 वेद-; K6 B6 (marg. as in text).9 Da3.a4 Cp (Cpp as in text) तंत्र- (for तर्क-). G1.3 -सुत्राणि; G2 -सूक्ष्माणि (for -शास्त्राणि). M7 चागमाः. —c) B0.6.7.8 (marg.).9 Da4 Dn1.n4 Ds2 D2.3.5–8 यथाश्रमम् (for °गमम्). M7 उपासीनाः (for °सीत). —d) G1 विध्यति B6.7.9 Da3.a4 D5.7 तात (for तत्र). (for सि°). M7 सिध्यंति ब्रह्माणि श्रिताः. ❀ Cp: सिध्यति फलभाग्भवति। ❀ —e) K7 सिद्ध-; G1.3 बुद्धि- (for सिद्धिः). Da4 प्रत्यक्षरूपां. —f) K1.2.4.7 D4.9 दृश्येत; G1 सूदयति (for दृश्यति).

C. 12. 9681
B. 12. 270(69). 45
K. 12. 275. 45

ह्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति ।
एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भोः ॥ ४१
नैव त्यागी न संतुष्टो नाशोको न निरामयः ।
न निर्विवित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ॥ ४२
भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम् ।
इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥ ४३
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एकमालम्बमानानां निर्णये किं निरामयम् ॥ ४४
कपिल उवाच ।
यद्यदाचरते शास्त्रमथ सर्वप्रवृत्तिषु ।
यस्य यत्र ह्यनुष्ठानं तत्र तत्र निरामयम् ॥ ४५
सर्वं पावयते ज्ञानं यो ज्ञानं ह्यनुवर्तते ।

---

41 Ś1 missing ( cf. v. l. 11 ). — a ) T2 M7 गौर् ( for नौर् ). K7 V1 B8 ( marg. as in text ) D4. 9 M6. 7 नाप्येव; D5. 7 नावेव; G1 नाविव ( for नावीव ). K2 निरुद्धा हि; Da4 निबद्धानि; G2 विबाध्यानि ( for निबद्धा हि ). Cpp अंधस्येवांधलग्नस्थम्. — b ) K6. 7 V1 Bo Da4 D4. 9 श्रोतसा ( for स्रो° ). K7 D4. 9 T G2. 3 M5 सं-; G1 तं; M1 वि- ( for स- ). T2 -निबंधता ( for °बन्धना ). K1. 2. 4 D5. 7 स्रोतसामनिबंधने ( D5. 7 °ना ); C3 ( gloss : अज्ञे पुरुषे संबद्धा ) स्रोतसासन्निबंधना. — c ) K1. 7 ह्रियमाना; V1 Bo. 7 क्रियमाणा; Dn4 D3. 6 T1 G1 ह्रीय°; D5. 7 क्लिश्यमाना ( for ह्रियमाणा ). V1 विद्वन् ( for विप्र ). — d ) K6 कुबुद्धीस्; K7 D9 दुर्बुद्धींस्; V1 Bo. 6–9 D2. 3. 5–8 कुबुद्धिस्; Da4 Ds2 T G1–3 M1. 6. 7 °द्धिं ( for °द्धींस् ). — T G1–3 M6 Kumbh. ed. read 41ef after 44. — e ) D6 बृहद् ( for एतद् ). V1 B6–9 Da4 ब्रवीहि ( for °तु ). K2 V1 B6–9 M7 भगवन् ( for °वान् ). — f ) K6 B6–9 उपसन्नो; K7 D9 उपासको ( for उपपन्नो ). M1. 6 हि ( for ऽस्मि ). K1. 2. 4. 7 D4. 9 [अ]धीष्व भोः ( K1. 4 भो ); V1 वै विभो; Da3 Dn1. n4 D8 D2. 6 T2 M1. 6 अधीहि भो ( for °हि भोः ). D5. 7 उपपन्नाय ब्रूहि मे; G2 °पन्नोस्मदीह्यभोः ( sic ).

42 Ś1 missing (cf. v. l. 11). Before 42, V1 Bo. 6. 7. 9 Da3 ( marg. ). a4 Cpp ins. कपिल उवाच. ❀ Cp: अत्र कपिल उवाचेति क्वचिद्दृश्यते पाठः । स च प्रमादलिखितो ज्ञेयः । ❀ — a ) T2 त्यागे ( for त्यागी ). — b ) K2 Bo. 7 Ds2 D3 T1 G2. 3 नशोको; K6 विशोको; K7 D4. 9 नामोहो; D5. 7 न मोही ( for नाशोको ). K6 वा ( for न ). K6 B7. 9 D5. 7 निराश्रयः; B6 lacuna ( for °मयः ). — c ) K1. 2 D8 नानिर्विचित्सो; K4 V1 Bo. 7. 8 Dn1. n4 D2. 3. 6. 8 T1 नानिर्विधि( K4 T1 °व )-त्सो; B6 lacuna; B9 Da3. a4 T2 Cn न निर्विधि-( T2 °व )त्सो; Ca नानिर्जिघृक्षो ( for न निर्विवित्सो ). K1. 2. 4 नावृत्तो; K6 नातिवृत्तो ( hypermetric ) ( for नावृत्तो ). K7 D4. 9 नावि( K7 om. वि )वित्सो नातिवृत्तो; G2 न निर्विशो नावृत्तो. ❀ Cn: ना पुरुषः, निर्विधित्सः चिकीर्षाशून्यः, आवृत्तः सङ्गविमुखः ॥ C3: विविलब्धुमिच्छा, तद्रहितः न । नावृत्तो, रागादिभ्योऽभिवृत्तः ॥ — d ) K1. 2. 4 नाप्युत्पन्नो; K6 Bo. 6–8 Dn1 Ds1 D... Ca ( gloss : न योगप्रवृत्तिमान् ) नोप( D5 °पा )वृत्तो; ... निर्विहिंसो; Ds1 G1 नाप्रवृत्तो; D8 lacuna ( for ...वृत्तो ). D7 T1 G1. 3 [ऽ]स्मि ( for ऽस्ति ).

43 Ś1 missing ( cf. v. l. 11 ). — a ) K6 B... हि; K7 lacuna ( for च ). M1 मृष्यंति ( for हृष्यन्ति ). Da3. a4 भगवंतोपि हृष्यंति. — b ) K1 शोदयंति ( for शोचन्ति च ). — c ) K1 तु; K2 हि ( for च ).

44 Ś1 missing ( cf. v. l. 11 ). V1 reads 44ab on marg. — b ) K1. 2. 4 T G1. 3 च वृत्तिषु; D... जंतुषु; G2 च वर्तिषु ( for प्रवृत्तिषु ). — c ) D... आलंब्य- ( for आलम्ब- ). — After 44, T G1–3 M... Kumbh. ed. read 41ef.

45 Ś1 missing ( cf. v. l. 11 ). B7 om. the re... — a ) K1 आचरणे; K7 D4. 9 समाचरेत्; Ds1 D... 5. 7 आचरिते ( for °रते ). K4 Da3. a4 शास्त्रे ( for शास्त्रम् ). ❀ Cp : आचरते, प्रतिपादयति । ❀ — ... K1. 2 B6. 7 D4. 9 अर्थं-; K4 Dn1 D8 T G1. 3 M5 C... ( gloss : अर्थादनपेतं ) अर्थ्यं; Dn4 G1 M1. 6 अर्थं ( for अथ ). K1. 2 D4. 9 -शास्त्र-; D5. 7 सर्वं ( for सर्व- ). K7 आश्रमाणां प्रवृत्तिषु. — c ) B3 ( marg. ) यत्र ( for यस्य ). K1. 2. 7 V1 D4. 9 तस्य तस्य; B3 Ds2 M1. 6 यत्र ( Ds2 °त्र ) यस्य; Dn1 G2 यस्य ह्यत्र; M7 यस्य यद्... ( for यस्य यत्र ). K1 M7 अनुष्ठानं; K7 यद्तु° ( hypermetric ); M1. 6 चानु° ( for ह्यनु° ). — d ) T1 G1... M5 तस्य तत्तु; T2 G2 तस्य तत्र ( for तत्र तत्र ). ... निरामयः.

46 Ś1 missing ( cf. v. l. 11 ). — a ) K7 D4. 9 M... 6. 7 पावयति; B6 (marg.) Cpp ( Cp as in text [gloss: अविद्यामलनिराकरणेन पूतं करोति ]) पारयते; Da3. a4 ... D5. 7 Ca प्लावयति; T2 M5 प्रापयति ( for पावयते ). K... V1 Bo. 6–9 Dn1. n4 D8 D2. 3. 6. 8 Cp. s ज्ञानं प्ला( K... पा- ; Cs प्ल )वयते सर्वं. ❀ Ca : प्लावयति । यथा ...

ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥ ४६
भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरागमाः ।
ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥ ४७
शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबला जनाः ।
कामद्वेषाभिभूतत्वादहंकारवशं गताः ॥ ४८
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारम्भा अपक्कमतयोऽशिवाः ॥ ४९
वैगुण्यमेव पश्यन्ति न गुणाननुयुञ्जते ।
तेषां तमःशरीराणां तम एव परायणम् ॥ ५०
यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः ।
तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ।
नित्यमेवाभिवर्तन्ते गुणाः प्रकृतिसंभवाः ॥ ५१
एतद्बुद्ध्वानुपश्यन्तः संत्यजेयुः शुभाशुभम् ।
परां गतिमभीप्सन्तो यतयः संयमे रताः ॥ ५२

C. 12. 9693
B. 12. 270(69).56
K. 12. 278. 56

---

दिकं जलेन प्लावितं जलाकारं भूत्वा द्रवीभावे कठिनतात्यागेन विलीयते, मृदिति न ज्ञायते, तद्वत् ॥ Cn : प्लावयते, संसारं नाशयति ॥ Cp : संसारसागरादुत्तारयति । ❀ —b) D5 om. यो ज्ञानं. K1.2 Dn1 D8 अनु·; D5.7 परि· (for अनु·). D4 ·वर्तते; D7 -वर्तिते. K4 अनुज्ञानं प्रवर्तते. —c) K7 V1 B6 (marg.) D4.9 T G1–3 अपेता (for °त्य). Da3.a4 बुद्धिः (for वृत्तिः). —d) Da4 स वि·; T1 सापि (for सा वि-).

47 Ś1 missing (cf. v. l. 11). B9 om. 47a–50b. —a) Da3.a4 T G1–3 भवंति (for भवन्तो). K6 V1 Bo.6–8 Da3.a4 Dn1.a4 D8 D2.3.6.8 Cp व्यक्तं (for नित्यं). —b) K1 सर्वताश्च. K6 B8 Dn1.n4 D8 D2.4.6–8 T G1–3 M5.7 निरामयाः (for °गमाः). ❀ Ca : निरागमाः, अगृहीतागमतत्त्वार्थाः ॥ Cp : वैदिकज्ञानशून्याः । ❀ —c) K1.4.6.7 Ds1 D4.5.7.8 T1 एकात्म्यं (K1 °त्म्यो; K6 °त्मं) (for ऐ°). D7 कं विद्धि (for कश्चिद्धि). —d) K6 V1 Bo.6–8 Da3.a4 Dn1.n4 D8 D2.3.6.8 Cpp उप- (for अभि-).

48 Ś1 missing (cf. v. l. 11). B9 om. 48 (cf. v. l. 47). —a) T1 G1–3 शास्त्राणि (for शास्त्रं हि). K3 हि बुद्धा; Dn4 स्वबुद्धा (for ह्य°). —b) K2 वादमला; K7 D4.9 °परा; V1 Bo.6–8 D8 D3.5–7 T G1.3 M6 °बलाजू; Ca (gloss : शुष्कतर्कैकपराः) °बला (as in text). —c) K1.2.4 -दोषाभि-; T1 -द्वेषोप-; G1 -द्वेवश्च (for -द्वेषाभि-). G2 कामवेगोद्भूतत्वाद् (submetric). —d) B8 ·वशंगमाः; Ds1 -वशं गतः.

49 Ś1 missing (cf. v. l. 11). B9 om. 49 (cf. v. l. 47). —a) K1.2.4 G2 यथातत्त्वम्; K6.7 Da3 T G3 M8 यथातथ्यम्; B6–8 Ds2 D3.5.7 यातातथ्यम्; Dn4 यथा तथा (for याथातथ्यम्). —b) Ds1 -दस्यवः; G2 -दस्युवत्. ❀ Cs : शास्त्रदस्यवः, शास्त्रार्थापहारकाः । ❀ —c) K1 ब्रह्मसेना; K6 Bo.6.7.8 (marg. as in text) D4.7 T1 ब्राह्मणास्ते (for ब्रह्मस्तेना). B8 (marg.) निरा-नंदा; G1.3 [अ]तिसंरंभा (for निरारम्भा). ❀ Cn : निरारम्भाः, शमाद्यारम्भशून्याः ॥ Cs : श्रवणादिहीनाः । ❀ —d) K1.2.4 अपेत- (for अपक्क-). G1 -मनयो; M1.6.7 -मनसो (for -मतयो). K6 V1 Bo.6.7.8 (marg. as in text) Da3.a4 Dn1.n4 D8 D2.3.5–8 Cpp दंभमोह-वशानुगाः.

50 Ś1 missing (cf. v. l. 11). B9 om. 50ab (cf. v. l. 47). —a) K6 Bo.6–8 Da3.a4 Dn1.n4 D8 D2.3.5–8 Cn.p.8 नैर्गुण्यम् (for वैगुण्यम्). D8 अनु- (for एव). K7 D9 पश्यंत्यो (D9 °तो) (for °ति). —b) Bo. B8 उप-; M6 अनि- (for अनु-). K7 -युंज्यते; Bo.7.8 -भुंजते; Da4 -भंजते; Dn1 G3 -युज्यते (for -युञ्जते). —c) K6 Bo.8 T1 G1.2 अंतः- (for तमः-). K3 -प्रवि-ष्टानां (for -शरीराणां). —d) T1 अंत (for तम).

51 Ś1 missing (cf. v. l. 11). G3 om. 51ab. —a) K1.2.4 यथा च (for यो यथा-). M1.6 लभते (for -प्रकृतिर्). —b) T1 G3 प्रकृत्याः; T2 G1 M1.5–7 °त्या (for °तेः). K4 Bo वशानुगाः; T1 वशं गतः. —c) K6 प्रद्वेष-; D5 द्वेषस्य; T1 G1–3 क्रोधश्च (for द्वेषश्च). —d) K6 B8 G1 क्रोधदं(G1 °डं)भो; T1 लोभो डंभो; G2 क्रोधारंभो; G3 क्रोधो डंभो (for क्रोधो दम्भो). K1 [ऽ]वृतं; M1.5.6 [ऽ]नृतो (for °तं). K1 तथा; K2.4 यथा; K7 V1 D4.9 तमः; B8 M1.6 दमः (for मदः). —e) T2 G1.3 [अ]नु- (for [अ]भि-). K6 B9 Dn4 D2.3 -वर्धते (for -वर्तन्ते).

52 Ś1 missing (cf. v. l. 11). —a) Bo.6–9 Da3 Da4 Dn1.n4 D8 D2.3.6.8 एवं (for एतद्). Da3 Dn1. Bo.n4 D2.3 ध्यात्वा; T2 G1 M6 बुद्धा (for बुद्ध्वा). K6 -पश्यंत; D5.6.8.9 तु; G1 न (for [अ]नु-). — Bo om. 52c–54d. —c) -पश्यंत्यः; T2 -पश्यंति. —d) K6.7 B6–9 Da3.a4 D5.7 सतां (for परां). Dn4 D8 D2.4.6–9 समये; G2 संभ्रमे (for संयमे). — After 52, M5 ins. : D5 यतयः समये रताः.

स्यूमरश्मिरुवाच ।
सर्वमेतन्मया ब्रह्मञ्शास्त्रतः परिकीर्तितम् ।
न ह्यविज्ञाय शास्त्रार्थं प्रवर्तन्ते प्रवृत्तयः ॥ ५३
यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः ।
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥ ५४
न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः ।
यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥ ५५
शास्त्रादपेतं पश्यन्ति बहवो व्यक्तमानिनः ।
शास्त्रदोषान्न पश्यन्ति इह चामुत्र चापरे ।
अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥ ५६
शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः ।
पिण्डमात्रं व्यपाश्रित्य चरितुं सर्वतोदिशम् ।

---

712* यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मिन्स इत्येव संबन्धः स्यादसंहितः ।

53 Ś1 missing (cf. v. l. 11). Bo om. 53 (cf. v. l. 52). K6 B9 Ds1 D6. 8 स्युमरश्मिर्; K7 D9 स्यूत°; D5 स्थम°; D7 स्थूण°; G1 ब्रूम° (for स्यूमरश्मिर्). — $^{a}$) T1 एव (for एतन्). K2 महा-; T G1-3 M5 त्वया; M1. 6 मम (for मया). D8 राजन् (for ब्रह्मन्). — $^{b}$) K1. 2 संप्र- (for परि-). D7 -कीर्तितः; M7 -कल्पितं (for -कीर्तितम्). — $^{c}$) K2 विज्ञाय (for [ह्य]वि-). — $^{d}$) Da1 G1 प्रवर्तयः (for प्रवृत्तयः).

54 Ś1 missing (cf. v. l. 11). Bo om. 54 (cf. v. l. 52). — $^{a}$) K1. 2. 6 Dn1 Ds2 D4 T2 G1. 2 M1. 6. 7 न्याय; K7 त्याज्य (for न्याय्य). K6 आधारः (for आचारः). — $^{b}$) K1. 2 सर्वे; Ds1 सर्वः; Ds2 D3. 5. 6 G2 सर्वं-; T2 स वै (for सर्वं). G2 स्थितिः (for श्रुतिः). — $^{c}$) K7 D4. 9 यद्यन्या(K7 °न्या)य्यम्; Dn1 D8. 6 G1 M1. 6 यदन्यायम्; G2 यथान्यायम् (for यदन्याय्यम्). K2 यदन्याय्महाशास्त्रम्. — $^{d}$) K2 एषा; G1 एषां. K1. 2. 4 शाश्वती; K6 V1 B6-9 Da3. a4 D5. 7 वैदिकी (for श्रूयते).

55 Ś1 missing (cf. v. l. 11). K1. 2. 4 om. (hapl.) 55. — $^{a}$) M6 अप्रवृत्तिर्. — $^{b}$) K6 काश्चिद् (for काचिद्). B6 D5. 7 ह (for [इ]ति). — $^{c}$) T2 वेष- (for वेद-). — $^{d}$) B6 तद्वच्छास्त्रम्; B9 तत्तच्छा°; Da3. a4 तत्र शास्त्रम्; D5. 7 T G1. 3 M1. 5-7 तदुच्छास्त्रम्; G2 कुतः शास्त्रम् (for तदशास्त्रम्). B8 (marg.) तच्छास्त्रमिति नः श्रुतिः.

56 Ś1 missing (cf. v. l. 11). Before 56, D8 ins. कपिल उवाच. — $^{a}$) K1. 2. 4 V1 D4. 9 अपेत्य; T2 अपेता (for °तं). G2 अश्यंति (for पश्यन्ति). — B7 om. (hapl.) $56^{bc}$. — $^{b}$) B8 (marg. as in text) मुक्त-; T1 G1. 3 M1. 5-7 [ऽ]त्यर्थ-; T2 G2 व्यर्थ- (for व्यक्त-). D6 -गामिनः (for -मानिनः). D5. 7 बहवोत्यक्तमादितः.

❀ Ca: व्यक्तमानिनः, व्यक्त एवायं वेदार्थ इति भ्रान्ताः। Cn: व्यक्तं प्रत्यक्षसिद्धं, तदेव मन्यन्ते । ❀ — B[illegible] om. $56^{e}$–$58^{b}$. Da3 Dn1. n4 transp. $56^{cd}$ and $56^{ef}$. — $^{c}$) G1 शास्त्रे (for शास्त्र-). K2 Ds1 -दोषा; G1 [illegible] M5. 7 -दोषं (for -दोषान्). K1 पश्यंत; D5. 7 पश्यन्ति (for पश्यन्ति). — $^{d}$) K4 D4. 5. 7. 8 वा (for the first च). D4. 5. 7 वा (for the second च). Bo. 8 (marg.) Dn1. n4 D8 D2. 3. 6 शोचंति च यथा वयं. — After $56^{cd}$, Bo. 8 Da3 Dn1. n4 D8 D2. 3. 6 Cn Kumbh. ed. ins.:

713* इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ।
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एवमालम्बमानानां निर्णये सर्वतोदिशम् ।

[ Bo om. line 2; Da3 om. lines 2-3. ]

—Bo. 8 D8 D2. 3. 6 Kumbh. ed. cont. after the above, while G2 ins. after $56^{cd}$, 714*. B7 D3 om. $56^{ef}$. — $^{e}$) D5. 7 अविज्ञात- (for °ज्ञान-). — $^{f}$) D[illegible] हीने (for हीन-). K1. 2. 4. 7 B6. 9 Da4 D4. 5. 7. 9 M[illegible] -ज्ञानास् (for -प्रज्ञास्).

57 Ś1 missing (cf. v. l. 11). T2 om. 57 (cf. v. l. 56). — $^{a}$) K7 D5. 7. 9 M7 शक्यते केन (for शक्यं त्वे°). K6 सुक्तेन; V1 Bo. 6-9 Da3. a4 Dn1. n[illegible] D8 D2. 3. 6-8 युक्तेन (for मु°). ❀ Ca: एकेन द्वैतादर्शिना आत्मैकनिष्ठेन योगारूढेन । ❀ — $^{b}$) K2. 4 कृतकृतेन (for °कृत्येन). — $^{c}$) K7 D6. 9 समाश्रित्य; T1 G1 उपा[illegible] G2 उपासित्वा; G3 अपाश्रिस्य (for व्यपा°). — K1. [illegible] Bo om. (hapl.) $57^{de}$. — $^{d}$) B7 वित्तं (sic); Da[illegible] चरितं; G2 चरंतः (for चरितुं). M7 सर्वतो दिशं. B8 (marg.) Dn1. n4 D8 D2. 6. 8 चरितुं विजितात्मना. — K6. 7 V1 B6. 7. 9 D3-5. 7. 9 T1 G2 (also). 3 M1. [illegible] Kumbh. ed. (also) ins. after $57^{cd}$: Bo. 8 D8 D[illegible] (also). 6 Kumbh. ed. after 713*: G2 after $56^{cd}$:

714* [illegible]न्त्यं वदमानेन शक्तेन विजितात्मना ।
[ K6. 7 तेनाधि-; D5 तेनाति-; D7 T1 G1. 3 Kumbh.

वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ॥ ५७
इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम् ।
दानमध्ययनं यज्ञः प्रजासंतानमार्जवम् ॥ ५८
यद्येतदेवं कृत्वापि न विमोक्षोऽस्ति कस्यचित् ।
धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः ॥ ५९
नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतःक्रिया ।
एतस्यानन्त्यमिच्छामि भगवञ्श्रोतुमञ्जसा ॥ ६०
तथ्यं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः ।
यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ॥ ६१

C.12.9706
B.12.270(69).68
K.12.275.68

इति श्रीमहाभारते शान्तिपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

---

ed. (second time) नात्यंतं; G2 (second time) M6 नानंत्यं (for आनन्त्यं). Bo वदमाने च; Kumbh. ed. (second time) वंदमानेन (for वदमानेन). D3 (second time). 4. 9 तेनाविवदमानेन (for the prior half). K7 सक्तेन (for शक्तेन). K6 अशक्तेन यथात्मना; Bo इह चामुत्र चापरे; B6. 8. 9 Da4 Dn1. n4 D8 D2. 3 (first time). 5–8 G2 (first time) श(B6 स)क्तेनावर्जितात्मना; B1 शक्तेन विदितात्मना; D4. 9 न सक्तेन जितात्मना; T1 G1. 3 M6 स(T1 अस)क्तेनाविदितात्मना; G2 (second time) सत्तेनाविदितात्मना (for the post. half).]

—e) K6. 7 D4. 9 वेदवाक्यं (for °वादं). T1 G1–3 M1. 5–7 समाश्रित्य (for व्यपा°). —f) K1. 6 V1 B7 D8 G1 M7 प्रभाषितं; K2 °शितुं; Da3. a4 °वितं (for °षितुम्). — After 57, K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5–7 Kumbh. ed. ins.:

715* अपेतन्यायशास्त्रेण सर्वलोकविगर्हिणा ।

[Da4 अपेत्य (for °त-). D6 -शस्त्रेण (for -शास्त्रेण). V1 Bo Ds2 -विगर्हणा (for °र्हिणा).]

58 Ś1 resumes from 58. T2 om. 58ab (cf. v. l. 56). —a) K2 दुष्कृतं; Da4 पुष्करं (for दु°). —b) K1. 2 कुटुंभम्; Da4 कुटंबम्; G3 कुडुं°. K2 -संश्रितं; G1 -संश्रुतं. —c) T1 अध्यापनं (for अध्ययनं). G1 M7 यज्ञं (for यज्ञः). —d) K6. 7 B9 D5. 7 प्रजाः (for प्रजा-). T2 -संतान (for °नम्).

59 Before 59, D8 T1 G1. 3 ins. स्यू(D8 स्यु)-मरश्मिः. K1 om. 59. —a) D8 यथा (for यदि). K7 D4. 6. 9 एव (for एवं). Ś1 K2. 4 वै; G2 [अ]स्ति (for [अ]पि). —b) M7 हि (for न). K7 D4. 9 कश्चन (K7 °नः) (for कस्यचित्). —c) G2 कामं (for कार्यं). ❀ Ca: धिक्कर्तारं, एतत्कर्तारं धिक् । ❀ —d) T2 G1. 2 श्रमं (for श्रमश्च). T1 G1–3 चात्र; T2 छाया (for चायं). G2 निरर्थकं.

60 a) G2 नात्यक्यम् (sic) (for नास्ति°). Ś1 K2. 4. 7 D4. 7. 9 G8 चास्य; K1 वास्य; B6 Da3. a4 चेत्स्याद् (for च स्याद्). —b) Ś1 K2. 4 देवानां (for वेदानां). B3 (marg.) अन्यया (for पृष्ठतः). Ś1 K1 V1 Da3. a4 Dn1. n4 Ds1 D3 G1 M7 -क्रियाः. -कृताः; ❀ Ca: पृष्ठतःक्रिया, वेदानामप्रामाण्यमापद्येत । ❀ —Ś1 reads 60c–61d on marg. —c) ❀ Ca: आनन्त्य, शाश्वतफलप्रदत्वम् । ❀ —d) K7 भगवान्.

61 Ś1 reads 61 on marg. 61ab partly damaged in Ś1. —a) Ś1 K1. 2. 4 सत्यं; K6 Bo. 3 Dn1. n4 D8 D2. 3. 6. 8 G2. 3 तत्त्वं; G1 तथ्या (for तथ्यं). K1 वचस्व (for वदस्व). —b) Ś1 K1. 2 Da3. a4 Ds2 D3–5. 7. 9 T G1. 3 M7 उपपन्नो; K7 उप*न्नो (for °सन्नो). K7 [ऽ]सि (for ऽस्मि). K1 अधीष्व; K3 अधीपु; K6 अधो हि; G2 अधीश (for °हि). K7 Dn1 Ds2 D4 T2 G3 M1 भो (for भोः). —c) K2 विद्यतो; V1 विहितो; Da4 विदिते (for °तो). —d) G1 अप- (for उप-). D5. 7 तथेदमुपशिक्षितुं.

Colophon. G6 missing: K3. 5 B1–3 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* Ś1 K1. 2. 4. 6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds1 D2–9 T G1. 2 M1. 5–7 मोक्षधर्म. — *Adhy. name:* K1 B6. 7. 9 Da3. a4 D2. 3. 8 M1 गोकपिलीयं; K2. 4. 6 V1 Bo. 3 Dn1 D8 D5. 6 गोकापिली(K2. 4 °ले)यं; K7 D4. 9 गोकपिलीये त्यागप्रशंसा; D7 त्यागप्रशंसा; M6 गोकपिलसंवादः; M7 कपिलसंवादे मोक्षप्रशंसनं. — *Adhy. no.* (figures, words or both): K6 B7 Dn4 M1. 6. 7 94; Dn1 D7 91. — *Śloka no.:* Da4 66; Dn1 68; Dn4 67; T1 G1. 3 M5 96; Ds2 95; D8 90; T2 109; G2 D8 69.

# २६२

C. 12. 9707
B. 12. 271(70). 1
K. 12. 276. 1

कपिल उवाच ।

वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतःकृताः ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १
शरीरमेतत्कुरुते यद्वेदे कुरुते तनुम् ।
कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः ॥ २
आनन्त्यमनुयुङ्क्ते यः कर्मणा तद्ब्रवीमि ते ।
निरागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकम् ॥ ३
धर्म इत्येव ये यज्ञान्वितन्वन्ति निराशिषः ।
उत्पन्नत्यागिनोऽलुब्धाः कृपासूयाविवर्जिताः ।
धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनम् ॥ ४
अनाश्रिताः पापकृत्याः कदाचित्कर्मयोनितः ।
मनःसंकल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः ॥ ५
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।

---

## 262

☞ This adhy. is missing in G6 (cf. v. l. 12. 259. 1).

1 ^a) D4.9 प्रमाणा. Dn4 प्रामाणं हि तु लोकानां (sic). — ^b) K1 वेदः. B8 (marg. as in text) Da3.a4 -क्रियाः (for -कृताः). — 1^cdef = Maitrā. Up. 6. 22; quoted in the Vākyapadīya under 1. 22. — ^c) G1 चेद् (for द्वे). K1 (by corr.) ब्रह्मणो; Da4 Dn4 G1 ब्रह्मणि (Da4 °णा). — ^d) K2.7 तत् (for यत्). — ^e) Da4 शब्दो (for शब्द-). K2 निष्क्रांतः (for °ष्णातः). M7 शब्दब्रह्मविनिष्णातः. ❀ Ca: शब्द-ब्रह्म, वेदः । ❀ — ^f) D4 om. (hapl.) from ह्माधि-गच्छति up to ब्राह्म (in 2^d).

2 D4 om. up to ब्राह्म (cf. v. l. 1). — ^b) Dn4 पदद्वे; T1 G2 यद्वै तत्; G3 यद्वेदात् (for यद्वेदे). T1 M1.6.7 मतिं (for तनुम्). D7 G1 यद्वै ते कुरुतेति तं. ❀ Ca: वेदे कुरुते तनुं, वेदार्थं शरीरं उपनयनद्वारा ब्राह्मणशब्दवाच्यं कुरुते ॥ Cn: गर्भाधानविधिना उत्पाद-यति ॥ Cp: उपनयनेन वेदाध्ययनयोग्यं शरीरं कुरुते ॥ Cs: यदुपनयनसंस्कारं कुरुते तद्द्वितीयं जन्म । ❀ — ^c) V1 B8 (marg. as in text) वेद-; Da3.a4 T2 M7 कृतः. Ś1 K1 Ds2 -शुद्धि-; K2 -बुद्धि- (for -शुद्ध-). T1 G2 [ऽ]पि (for हि). — ^d) K6 Bo.6.8.9 Da3.a4 Ds2 D6–7 वेदे (for पात्रं).

3 ^a) K6 Bo.6–9 Dn1.n4 D2.3.6.8 अत्र युङ्क्ते( K6 B9 °ङ्क्ते )दं; V1 अनुयुक्तोयं; B8 (marg.) Da3.a4 °युक्तं यत्; T1 G1.3 M5 °चिन्त्यैवं (G1 °व); T2 °चिंत्येदं; G2 °चिंत्यं च; M1.6 °चिंतेयं; M7 °चिंत्याद्दं (for °युङ्क्ते यः). K7 D4.9 यत् (for यः). ❀ Cs: आनन्त्यं, मुक्तिफलत्वम् । ❀ — ^b) B7 Dn1.n4 Ds D1 3.6.8 T2 M5.7 कर्मणां; T1 G1–3 °णस्. K7 D4.1 सद्; Ds2 प्र- (for तद्). Ds1 D2 ब्रवीतु मे (for °मि ते). ❀ Cn: कर्मणां फलमानन्त्यं मोक्षोपयोगि चित्त-शुद्धिरूपम् । ❀ — ^c) Dn1 D6 अनागमम् (for निरा°). K4 अनंतिक्षुं; D5 अनैतिथ्यं (for °तिह्यं). ❀ Cp: इति हेति स्मृतिहेतुत्वादैतिह्यमनुमानं, तत्र भवतीत्यनैतिह्यम् ॥ Cv: निरागमं, प्रवृत्तिकर्मप्रतिपादकागमे श्रद्धां विना । ❀

4 ^a) K7 [ऽ]वज्ञान्; T1 G1.3 यज्ञं (for यज्ञान्). — ^b) Da3 नराशिषः. — ^c) K2 [ऽ]लुब्धः. ❀ Cp: उत्पन्नत्यागिनः, उपस्थितफलत्यागिनः । ❀ — ^d) T1 क्रियासूया-; G1.2 कोपा°; M6 कृता° (for कृपा°). — ^e) K7 T2 धन्यानाम्; T1 G2 दाना° (for धना°). T1 G2 पात्रं (for पन्थास्). — ^f) D8 प्रतिपादिते. ❀ Ca: तीर्थेषु, उपरागादिषु ॥ Cn: सत्पात्रेषु । ❀

5 ^a) K2 अनाश्रित्याः; K7 D9 न लिप्यंते; D4 अनासृताः; G1 °श्रुताः (for °श्रिताः). K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5–8 पाप(K6 °क)कर्म; K7 D4 °कृत्यात्; T1 G1 M5 °कृत्यां; T2 G2 °कृत्यं; M7 °कृताः (for °कृत्याः). — ^b) K4.7 Bo.8 Dn1.n4 D3 D2.3.6–8 Cp कर्मयोगिनः; K6 अपि योनितः; B6.8 Da3.a4 कर्ममानिनः; D5 कार्ययोगिनः; D9 कर्मयोगतः; T1 G1–3 ब्रह्मयोनितः; T2 कर्मयोगितः (for कर्मयोनितः). — ^c) D4.9 -संशुद्धा; D7 -संशुद्धिर्. — ^d) K2.7 V1 Dn4 D4.9 T G1–3 M7 विशुद्धा (for °द्ध-). T2 -निश्चये.

6 ^a) Ds2 नक्रुध्यतो. B3 [ऽ]नु- (for ऽन-). — G1 om. 6^cd. K6 B6–9 Da3.a4 D5–7 repeat 6^cd after 7. — ^c) T1 (also as in text) सुशुद्धाश्च; G1 सुशुक्लाश्च (for त्रि°). K6 (first time) V1 B6.7.8 (marg. as in text) Da3.a4 (all first time) ज्ञाननिष्ठात्मतृप्ताश्च;

ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहिते रताः ॥ ६
आसन्गृहस्था भूयिष्ठमव्युत्क्रान्ताः स्वकर्मसु ।
राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ॥ ७
समा ह्यार्जवसंपन्नाः संतुष्टा ज्ञाननिश्चयाः ।
प्रत्यक्षधर्माः शुचयः श्रद्दधानाः परावरे ॥ ८
पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः ।
चरन्ति धर्मं कृच्छ्रेऽपि दुर्गे चैवाधिसंहताः ॥ ९
संहत्य धर्मं चरतां पुरासीत्सुखमेव तत् ।
तेषां नासीद्विधातव्यं प्रायश्चित्तं कदाचन ॥ १०
सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः ।
न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः ॥ ११
य एव प्रथमः कल्पस्तमेवाभ्याचरन्सह ।
अस्यां स्थितौ स्थितानां हि प्रायश्चित्तं न विद्यते ।
दुर्बलात्मन उत्पन्नं प्रायश्चित्तमिति श्रुतिः ॥ १२

C. 12. 9720
B. 12. 271[70].14
K. 12. 276. 14

---

K6 B6-9 Da3. a4 D5-7 (all second time) त्रिशुक्ला ज्ञाननिष्ठास्ते (B8 °श्च). ❀ Cn: त्रिशुक्लाः, जन्म कर्म विद्या चेति त्रीणि शुक्लानि येषाम् ॥ Cs: योनिविद्याकर्मभिः शुद्धाः ॥ Cv (reading त्रियुक्ताः): त्रिभिर्वेदैर्युक्ताः । ❀

7 a) D6 गृहस्थ-. G1 भूयिष्ठां. — b) D9 अव्यु-क्रांताः; T1 G1-3 ह्युपक्रांताः; T2 M7 अभ्युत्क्रांताः (for अव्यु°). ❀ Cn. p: अव्युत्क्रान्ताः आदरवन्तः । ❀ — c) Ś1 K2 इंजानाश्च; K6 B6. 9 Da3. a4 ब्राह्मणाश्च (for राजानश्च). K6 V1 B6-9 Da3. a4 तपोयुक्ता. — d) K3 ब्रह्मणाश्च; K6 B6. 9 Da3. a4 राजानश्च. K4. 6 B1 Da3. a4 D4 य(B7 त)था विधिः; T1 तथाविधि. — After 7, K6 B6-9 Da3. a4 D5-7 repeat 6cd.

8 a) K6 सममार्जव-; T2 शमाद्या° (for समा ह्या°). — b) G2 विशुद्धा (for संतुष्टा). T2 ज्ञाननिश्चये. — K2. 4 om. 8c-9d. — c) K6 -धर्मे (for -धर्माः). ❀ Cs: प्रत्यक्षधर्माः, प्रत्यक्षीकृतधर्मफलाः । ❀ — d) K1 श्रद्धानाः. Ś1 K1 B8 (marg. as in text) M7 परापरे; D8 °वराः; T1 G1-3 तपोधनः. ❀ Cs (reading परावरान्): उच्चावचान्धर्मान् । ❀

9 K2. 4 om. 9 (cf. v. l. 8). — a) G2 भविता-त्मानो. ❀ Cp: पुरस्तात्, जन्मान्तरे ॥ Cs: भाविता-त्मानः, परमात्मध्यानपराः । ❀ — b) B7 -प्रजाः (for -व्रताः). — c) Da3 चरित- (for चरन्ति). Da4 धर्मे. Ś1 K1 कृच्छ्रेण; D4 कृच्छ्रोपि; G2 कृच्छ्रेषु. — d) D4 दुर्गो (for दुर्गे). D4. 9 वै(D4 वे)व; T1 G1. 3 चापि; G3 M1. 5-7 वापि (for चैव). K6. 7 V1 D4. 7. 9 Ca (gloss: कृताभिसंधयः) Cp [अ]भिसंहिताः; Bo. 6-9 Da3. a4 Dn1. n4 D8 D8. 6. 8 [अ]पि संहताः (for [अ]-धिसं°). ❀ Cs (reading सुसंहिताः): सध्री[? सध्री]-भूय स्थिताः । ❀

10 G3 om. 10-11. — a) Ś1 K1. 7 D4. 9 संहित्य; K4 संहित्य (sic); D2 महत्य. Bo धर्माच्च (for धर्मं). Ś1 K1. 4 चरतः (for चरतां). K2 सांहित्य धर्मं चरताः (sic); V1 संहत्य चरतां धर्मं. — b) Da4 सुखम् (for सुखम्). — V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6 Cp Cal. Bom. ed. repeat 10cd after 12ab; while D7 repeats 10cd after 12ef. — c) Dn4 Ds1 (both second time) T1 G1 नासीद्; G2 आसन् (for नासीद्). Dn1 (second time) विधातव्ये. — d) K4. 6 V1 (both times) Bo. 6. 7 Da3 (all first time). a4 (both times) Dn1. n4 D8 D2. 3 (all first time). 5. 6 (first time). 7 (both times). 8 T2 G3 M1. 6. 7 Cal. Bom. ed. (both first time) कथंचन (for कदा°).

11 G3 om. 11 (cf. v. l. 10). D5 om. 11c-12b. — a) G1 M6 संहत्य (for सत्यं हि). D6 सर्वम् (for धर्मम्). K2 आश्रित्य (for आस्थाय). T2 ते हि धर्मसमास्थाय. — b) K2 गताः; D7 नराः; M7 मतां (for मताः). — c) M7 अनुकुर्ध्यते. ❀ Ca. p: मात्राम् इन्द्रियम् ॥ Cn: मीयन्ते विषया अनयेति मात्रा बुद्धिः । तां नानुरुध्यन्ते, अपि तु शास्त्रमेव ॥ Cs: मात्राम्, विषयपरां परान् । Cv: मात्राम्, रूपरसादिकम् ॥ ❀ — d) K7 Da4 Da3 D4. 7. 9 T1 G1. 2 न धर्मच्छ(T1 °र्मांच )लं ततः. ❀ Cs: अन्ततः कारणकालेऽपि । ❀

12 D5 om. 12ab (cf. v. l. 11). — a) T2 एषः; G2 मे च; M1. 6 एवं. K2 प्रथमा; Da3 प्रथमं. — b) Ś1 K2. 4 [अ]त्राचरेद; K1 D4. 9 [अ]न्वाचरन् (K1 रेत्); Da3 [अ]द्याचरन्; Da4 [आ]चरन् (submetric); D7 T G1-3 M1. 3-7 [अ]त्राचरन् (for [अ]भ्याचरन्). D7 T G1. 3 M5 महान्; G2 महत् K7 D4. 9 सदा; (for सह). — After 12ab, D7 reads 12ef followed by repetition of 10cd; while, V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6 Cp Cal. Bom. ed. repeat 10cd. — c) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3, 5-8 तस्मिन्स्थितौ (for अस्यां स्थितौ). G2 अन्यान्स्थितासितानां हि (sic). — ef) Ś1 K1. 2. 4. 7 D4. 9 T G1-3 M5 यदा च (T G1-3 M5 तु) दुर्बलात्मानः प्रायश्चित्तं तदा (G1 तथा) भवेत्.

C. 12. 9721
B. 12. 271 (70) 15
K. 12. 276. 15

यत एवंविधा विप्राः पुराणा यज्ञवाहनाः ।
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः ।
यजन्तोऽहरहर्यज्ञैर्निराशीर्बन्धना बुधाः ॥ १३
तेषां यज्ञाश्च वेदाश्च कर्माणि च यथागमम् ।
आगमाश्च यथाकालं संकल्पाश्च यथाव्रतम् ॥ १४
अपेतकामक्रोधानां प्रकृत्या संशितात्मनाम् ।
ऋजूनां शमनित्यानां स्थितानां स्वेषु कर्मसु ।
सर्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः ॥ १५
तेषामदीनसत्त्वानां दुश्चराचारकर्मणाम् ।
स्वकर्मभिः संवृतानां तपो घोरत्वमागतम् ॥ १६
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
अशक्नुवद्भिश्चरितुं किंचिद्धर्मेषु सूचितम् ॥ १७

---

13 a) K2 अत; K7 D4. 9 एत (for यत). G1 M7 प्राहुः (for विप्राः). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 एवं बहुविधा विप्राः; T G2. 3 M1. 5. 6 एत एवंविधाः (M1. 6 °धः) प्राहुः. — b) Bo. 6 पुराणे; T G1–3 M1 ब्राह्मणा; Cp (gloss : पूर्वयुगभाविनः) पुराणा (as in text). ❀ Ca. p : यज्ञवाहनाः, यज्ञनिर्वाहकाः ॥ Cs : तस्मिन्बहुषयज्ञे समासीनाः । ❀ — d) Bo वृत्तमंतो; M1. 6. 7 व्रतवंतो. — e) K7 Ds D4. 9 T G1. 3 यजंते; D5 यतंतो. K4 यज्ञो. — f) K2 G1. 2 M1. 6. 7 निराशी-. D5 बंधनाद्. K4 वधाः; D6 च्युताः (for बुधाः).

14 a) Da3. a4 येषां. K1. 2 यज्ञश्; G1. 3 M1 यज्ञांश् (for यज्ञाश्). G1. 3 वेदांश्च. — b) Bo स्वकर्माणि; Da3. a4 D4 कर्मणि च; Ds धर्माणि च. K7 यथागसं; G2 °गतं; M1. 6 °गमः. — c) K7 आगसाश्; T2 G1. 2 M5 °मश्च् (for °माश्). Dn1 T G1–3 M1. 5–7 Kumbh. ed. यथाकामं (M1 °मः); Bom. ed. यथाकाले (for °कालं). — d) K4 D6 T G1. 2 संकल्पश्च; V1 कल्पाश्च हि; B6 (marg.) सकर्माश्च; G1 संकल्पय (for °ल्पाश्च). K6 V1 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 यथाक्रमं; B3 M7 °गमं (for °व्रतम्).

15 a) Da4 अपेतं; M1. 7 व्यपेतं-. T2 -कामः. — After $15^{a}$, K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 editions read $16^{b}$ for the first time followed by $16^{c}$, second time, repeating the same in the proper place. — b) K7 अकृत्या. Ś1 K2 संश्रितात्मनां; K4. 6 B6 Da3. a4 Dn1. n4 Ds D2–4. 6. 8. 9 शंसि(Da3 °शि)ता°; D5 शंशिता°; G1 संशितात्मनः. — M1. 6. 7 om. $15^{c}$–$16^{b}$. — c) K2 यजूनां; Da3. a4 धातूनां; Dn1 lacuna; D7 ऋतूनां; G2 साधूनां (for ऋजूनां). Ś1 (*sup. lin.* as in text) K1. 2. 4 कृतविद्यानां; K7 V1 Bo. 9 Da3. a4 D5. 6 Cp (gloss : साम्येनैव व्यवहाररतानां) समनि(K7 °नी)त्यानां; B3 (marg.) समवृत्तानां (for शमनित्यानां). — d) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 स्वेषु कर्मसु वर्ततां. — e) K4 इव (for एव). Da3. a4 सर्वमातंस्यायवासीद् (sic). ❀ Ca : आनन्त्यम्, अनन्ताय हितमानन्त्यम् ॥ Cp : आनन्त्यम् अनन्तफलम् ॥ ❀ — f) K2 इत्यतः (for इति नः).

16 M1. 6. 7 om. $16^{ab}$ (cf. v. l. 15). — a) Ś1 K1. 2 अधीन-; K7 D4. 9 अहीन- (for अदीन-). Dn1 -सत्वाते. — K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 editions read $16^{b}$ for the first time after $15^{a}$. — b) Ds (both second time) ईश्वराचारकर्मणां; D1 दुश्चराचारकारिणां. — K1. 2. 4. 7 D4. 9 T G1. 3 Ca. p. v read $16^{c}$–$18^{b}$ (K7 D4. 9 read $16^{c}$–$17^{d}$) for the first time after 12. 261. 33; while K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 editions read $16^{c}$ for the first time after 12. 261. 33, for the second time after 12. 262. $15^{a}$, reading $16^{d}$–$18^{b}$ for the first time after 12. 261. 33. — c) K4 (second time) सु- (for स्व-). K1. 2 (both first time) Dn4 D7 (both second time) T G3 (all first time) M1. 6. 7 संशितानां; K1. 4 (both first time) V1 (first and third time) Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 G1 Ca. p. v. (all first time) संश्रितानां; K6 V1 B7–9 Da3. a4 (all second time) शासितानां; K6 (third time) संस्कृतानां; K7 D4. 9 (all first time) नाम तेषां (K7 [also] फलं); Bo. 6 Dn1 Ds D2. 3. 8 (all second time) editions (both times) शंसितानां; Bo. 6. 8 (marg.) Dn1. n4 D3. 3. 6. 8 (all third time) संभृ°; D5 (second time) संश्रि° (for संवृ°). Ds1. s2 (before corr.) (both third time) स्वकर्मिणां तपो घोरं. — d) Cp. as in text. K1. 4 (both second time) तमो (for तपो). K2 Da4 (both second time) घोरं (Da4 °रे) त्वम् (for घोरत्वम्). V1 (first time) B3 (marg. as in text) (second time) T G1. 3 (all first time) आगमत् (for आगतम्). D5. 7 (both first time) तपो घोरं समागतं. ❀ Cp : तत्कर्मस्थितं तपः संसारजनकत्वेन घोरत्वमागतम् । ❀

17 For the repetition in K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1. 3 Ca. p. v editions, cf. v. l. 16. — a) D5. 7 (both second time) सद (for तं). D4 (second time) सदाचारम्; M1 समा

निरापद्धर्म आचारस्त्वप्रमादोऽपराभवः ।
सर्ववर्णेषु यत्त्वेषु नासीत्कश्चिद्व्यतिक्रमः ॥ १८
धर्ममेकं चतुष्पादमाश्रितास्ते नरर्षभाः ।
तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिम् ॥ १९
गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः ।
गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः ॥ २०
धर्ममेतं चतुष्पादमाश्रमं ब्राह्मणा विदुः ।
आनन्त्यं ब्रह्मणः स्थानं ब्राह्मणा नाम निश्चयः ॥ २१
अत एवंविधा विप्राः पुराणा धर्मचारिणः ।
त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः ॥ २२ C. 12. 9730 B. 12. 271(70).24 K. 12. 275. 26

चारम्. Ś1 K1. 2 (last two both times). 4 (first time) आचारं; K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 Ca p. v editions (all first time) आश्रित्य; V1 (first time) आचार्यं (for आश्रयं). — b) K6 Bs. 8. 9 Da3. a4 (all first time) पुराणे (for °णं). D6 (second time) शाश्वती. V1 (second time) समं (for ध्रुवम्). ❀ Cp: तं प्रसिद्धं सदाचारं त्रिराचमनस्नानादिरूपम् । पुराणं शाश्वतं ध्रुवं ब्रह्मैव कूटस्थमाश्रयेदिति भावः । ❀ — c) K6 V1 Bo. 6. 7. 8 (marg.). 9 Dn1. n4 Ds D2. 3. 5–8 Ca. p. v. editions (all first time) अशक्नुवंतश्च; B8 (marg. as in text) (second time) अशक्तवद्भिश्च; Da3. a4 (both first time) अशक्यवंतश्च; T2 अशक्नुवत्यश्च (for °वद्भिश्च). K1 (first time) रचित्वं; B6 (marg.) 7. 8 T1 G1 (all first time). 2 चरितं (for °तुं). — d) G3 किं च; M1 कश्चिद्; M7 कंचिद्; Cv किंस्विद् (for किंचिद्). Ś1 K1. 3. 4 (last three second time) T2 (both times) धर्मेण (for °षु). Ś1 K1. 2 (last two first time). 4 (both times). 6 V1 Bo. 6. 7. 8 (marg. as in text). 9 Das. a4 Dn1. n4 Ds D2. 3. 5–8 T1 G1. 3 Ca. p. v editions (all first time) सूत्रितं; K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 (all second time) सूक्ष्मतां; D5. 7 (both second time) तत्त्वतां (for सुचितम्).

18 For the repetition in K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1. 3 Ca. p. v editions, cf. v. l. 16. K7 D4. 9 read 18ab for the first time after 12. 261. 34. — a) T G1. 3 (all first time) निरापद्धर्मसाचारम् (G1 °रो); Cv (gloss: चिच्छिदाख्यापद्धर्मरहितः) अनापद्धर्म आचारः. ❀ Cp: अयमेव धर्मो निरापत्, अन्यस्तु सकामो धर्म आपत् । ❀ — b) K2 (both times). 6 (second time) त्वप्रसादो; K4 (both times). 7 (second time) V1 Bo. 6–9 Da3. a4 Dn1. n4 D3 (all first time) D2. 8 (both both times). 5–7 (all first time). 8. 9 (both second time) Ca. p. v editions (all first time) ह्यप्रमादो; K6 (first time) ह्ययमादो (sic); K7 D9 (both first time) सोऽप्रमादो; Dn1. n4 Ds D4. 6 (all second time) T (both both times) G1 (second time). 2. 3 (both times) M1. 5–7 अप्रमादो; D4 (first time) सप्रमादा; G1 (first time) प्रमादो (for त्वप्रमादो). ❀ C3: अपराभवः धर्मान्तरेणापरिभूतः । ❀ — c) Da3. a4 सर्वे (for सर्व-). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 जा( D6 ज्ञा )तेषु; T1 G3 यत्नेषु (for यत्तेषु).

19 ab) G1. 2 ये (for ते). T G1–3 M1. 5–7 नराः प्रभो (for नरर्षभाः). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5 (also as in text). 6. 7. 8 (also as in text) Cp Cal. Bom. ed. व्यस्त( K6 वृत्त )मेकं च( Ds1 D2 °कञ्च )- तुर्धा हि ब्राह्मणा आश्रमं वि( Ds1 °मान्वि )दुः (cf. 21ab). K1 ग्रंत- (for सन्तो). — c) K2. 4 ते (for तं).

20 a) T2 एवं. — b) K6 वलमन्ये; D5. 7 वनमध्ये; G2 °मेते (for °मन्ये). — c) Ś1 K2. 4. 6 D7 [अ]भिसंस्( Ś1 sup. lin. °संह्र )त्य; G2 [अ]मवञ्चित्यं· [अ]मवञ्चित्य; — d) K6 धर्मचारिणः; ❀ Cp: स्थिता इति शेषः । ❀ M7 ब्रह्मचारिणं (for °चारिणः).

21 Dn1 Ds D2. 3. 8 Cal. Bom. ed. om. (hapl.) 21a–22b. — a) K1 धर्ममेति; K2 धर्म संतश्च; K4 धर्ममतं; K7 B6 D4. 5. 7. 9 Cp °मेवं; V1 D6 °मेतच्च; Bo °मेकं; B8 °मेकश्च (for °मेतं). Bo. 6–9 Da3. a4 D8 चतुर्धा तु; Cp °ष्पादम् (as in text). T G1. 8 M1. 5–7 Kumbh. ed. व्यस्तमे( M1. 6 °स्त ए )कं चतुर्धा तु. — b) K1 आश्रमां; K2 °मान्; G1 ह्याश्रमं. K2. 4 Da4 Cp (gloss: वेदेन; Cpp as in text) ब्रह्मणा; B8. 9 ब्राह्मणं. Kumbh. ed. ब्राह्मणा आश्रमं (by transp.). D4 om. (hapl.) from णा विदुः up to धर्म (in 22b). G3 ह्याश्रयं ब्रह्मणः पदं. — c) K2. 7 आनंत्य- (K2 °त-). K2. 7 Da3 D9 -ब्राह्मणः; B7 ब्रह्मणे. T G1–3 M1. 5–7 Kumbh. ed. सर्वे (T1 °वं-) सर्वत्र तिष्ठंतो. — d) Cp as in text. Ś1 K1. 2. 4 V1 B8 D5. 7 ब्राह्मणो. Ś1 निश्रयाः. K7 D9 ब्राह्मणानां स निश्चयः; D3 ब्रह्म नाम निराश्रयः; T G1–3 M1. 5–7 Kumbh. ed. गच्छंति परमां गतिं.

22 Dn1 Ds D2. 3. 8 Cal. Bom. ed. om. 22ab. — a) D4 om. up to धर्म (in 22b) (cf. v. l. 21). — a) K6. 7 Bo. 7 Da4 Dn4 D8. 9 G2 M1. 5–7 Kumbh. ed. एत; D5. 7 येन; T1 G1. 3 यत; T2 एतम् (for अत). D8. 7 चैव (for एवं). T G1–3 M1. 5–7 Kumbh. ed.

C. 12. 9731
B. 12. 271(70). 25
K. 12 276. 26

नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः ।
आनन्त्यमुपसंप्राप्ताः संतोषादिति वैदिकम् ॥ २३
यद्यागच्छन्ति संसारं पुनर्योनिषु तादृशाः ।
न लिप्यन्ते पापकृत्यैः कदाचित्कर्मयोनितः ॥ २४
एवं युक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ।
कर्मैव पुरुषस्याह शुभं वा यदि वाशुभम् ॥ २५
एवं पक्वकषायाणामानन्त्येन श्रुतेन च ।
सर्वमानन्त्यमेवासीदेवं नः शाश्वती श्रुतिः ॥ २६
तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम् ।
चतुर्थ औपनिषदो धर्मः साधारणः स्मृतः ॥ २७
स सिद्धैः साध्यते नित्यं ब्राह्मणैर्नियतात्मभिः ।
संतोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते ॥ २८
अपवर्गगतिर्नित्यो यतिधर्मः सनातनः ।
साधारणः केवलो वा यथाबलमुपास्यते ॥ २९

---

प्राहुः ( for विप्राः ). Cp येन चैवंविधा विप्राः. — b) Da4 पुराणे; Cp ( gloss : पूर्वकालीनाः ) पुराणा ( as in text ). K6.7 Bo.7-9 Da3.a4 D4.6.9 T G1-3 M1.5-7 Kumbh. ed. ब्रह्मचारिणः; B6 ब्रह्मचारिणं ( for धर्मचारिणः ). ❀ Cp : ब्रह्मचारिणः, मांसमैथुनत्यागपराः । ❀ — c) K6.7 D4.9 एते तु ( for त एते ). D3 ( before corr. ) भुवि ( for दिवि ). K2 दृशंतो. ❀ Cs : एते, नारदप्रमुखाः । ❀ — d) K7 D4.9 द्विजोत्तमाः; D5.7 द्वि जातयः ( for द्विजा° ).

23 a) B8 ( marg. as in text ) D5.7 नक्षत्राणां. B8 हि; D5-7 च ( for [इ]व ). Da3 विधिष्ण्येषु; Da4 [इ]व धिष्णेषु. ❀ Cp : धिष्ण्येषु, विमानेषु । ❀ — b) Dn1 तारकागणः; G2.3 M7 °गुणाः. — c) D7 इति ( for उप- ). Da3.a4 आनंत्यं च पदं ( Da4 °द- ) प्राप्ताः. — d) K2 [अ]वैदिकं. T1 G1-3 वसंतो दिवि देववत्.

24 a) K2 T1 G1 यदा; B8 ( marg. as in text ) ये; D5-7 यथा; G2.3 तद्वा ( for यदि ). G2 तरंति ( for [आ]गच्छन्ति ). Da3 संसारे. — b) Da3.a4 तादृशाः; D5.7 तादृशं. — c) M7 नि- ( for न ). K7 Dn3 लिप्यते; G3 लुप्यंते ( for लि° ). K1 पापकृत्ये; K6.7 B6.9 Da3 M1.5-7 °कृत्याः; Da4 °कृता; D4.9 °कृत्यात्; D5.7 °तस्तु; T1 G1-3 °कृद्भिः ( for °कृत्यैः ). — d) B8 ( marg. as in text ) कर्हिचित् ( for कदा° ). K7 D4.9 पापयोगिनः; Da3.a4 कर्मयोगतः; D5.7 °योगिनः ( for °योनितः ). — After 24, K6.7 V1 Bo.6-9 Da3.a4 Dn1.n4 D8 D2-9 editions ins. :

716* एकमेव ब्रह्मचारी शुश्रूषुर्घोरनिश्चयः ।

[ B9 एतद् ( for एव ). K7 D4.9 गुरु- ( for घोर- ).]

25 K2 om. ( hapl. ) 25. — a) D5.7 एवमुक्तो; G2 एवंविधो ( for एवं युक्तो ). K1 ब्रह्मणः. — b) T1 G1-3 नब्राह्मणो ( for ब्राह्मणको ). D5.7 परः ( for भवेत् ). ❀ Cp : ब्राह्मणको ब्राह्मणाधमः । निन्दायां कः प्रत्ययः । ❀ — c) Bo.6.7.9 Dn1 D8 D2.3.8 कर्मैवं; T1 G1 कर्मैव. T G1-3 [आ]हुः; M1.6.7 [इ]ह ( for [आ]ह ). — d) D5.7 शुभं वाशुभमेव वा.

26 a) K1.2.4 सर्व- ( for पक्व- ). Some MSS. कषायानाम्; K7 -कषायेण. — b) Da3 आनंतेन; M1 संयमेन ( for आनन्त्येन ). Ś1 K1.2.4 व्रतेन; K7 D4.9 ध्रुवेण ( for श्रुतेन ). K6 Da3.a4 D8 D4 वा ( for च ). — c) Dn4 सर्वे ( for सर्वम् ). K6 V1 Bo.6-9 Da3.a4 Dn1.n4 D8 D2.3.6.8 आसीद्वै ( D6 °द्वा ); D4 corrupt ( for एवासीद् ). — d) B8 एषा; T G1-3 M1.5.6 इति; M7 इयं ( for एवं ). M1.6 श्रूयते ( for शाश्वती ).

27 a) D9 ( before corr. ) आपेत-; G1 अप्येत-. — b) K1 निर्निधानां; K2.4 Da4 निर्नक्तानां; K6 D4 T2 G1 निर्नि°; D5.7 निर्मु° ( for निर्णि° ). K7 शुभात्मानां. — c) K6 V1 Bo.6-9 D2.3.6.8 Cp चतुर्थोपनिषद्धर्मः; G2 °र्थैकोपनिषदो. ❀ Cp : चतुर्थः चतुर्थाश्रमसाध्यः । ❀ — d) K4 साधारणाः. K1 ( before corr. ) K4 स्मृताः; D5 मतः; D7 श्रुतः ( for स्मृतः ). V1 Bo.6-9 Da4 Dn1.n4 D8 D2.3.6.8 साधारण इति स्मृतिः ( V1 स्मृतः; B6.8 Ds1 D8 श्रुतिः ); Da3 साधारणनिषद्धीतः ( sic ).

28 a) K4 स सिद्धौ; K6 B6 Da3.a4 Cp ( gloss : मोक्षः ) संसिद्धिः; K7 B7.8 D8 D3.7.9 M1.5.6 संसिध्यैः; V1 यस्मिन्सं-; Bo.9 Dn1.n4 D2.4.6.8 T G1-3 M7 editions संसिद्धैः; D5 समिध्यौ ( for स सिद्धैः ). T G1-3 M1.5-7 Kumbh. ed. सेव्यते ( for साध्यते ). — c) K4.6 संतोषमूल-; D5 °मूलं ( for °लस् ). — d) K6 D6 ज्ञानधिष्ठानम्; K7 D4.9 T2 G2 M5.7 Kumbh. ed. ज्ञानाधिष्ठान; G1 °नुष्ठानम्.

29 a) K4.6 V1 Bo.6-9 Da3.a4 Dn1.n4 Ds2 D2.3.5-8 G3 M1.6.7 editions -मतिर्; Ds1 T1 G1.2 M1 -मतेर्; T2 -मतो ( for -गतिर् ). — b) Ds1 यतिधर्मः; D4 °धर्मे; G2 यति धर्मः. — c) Da3.a4 Ds1 D2

C. 12. 9827
B. 12. 273(2). 17
K. 12. 278. 17

स तु धर्मो मृगो भूत्वा बहुवर्षोषितो वने ।
तस्य निष्कृतिमाधत्त न ह्यसौ यज्ञसंविधिः ॥ १६
तस्य तेन तु भावेन मृगहिंसात्मनस्तदा ।
तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिया ॥ १७

ततस्तं भगवान्धर्मो यज्ञं याजयत स्वयम् ।
समाधानं च भार्याया लेभे स तपसा परम् ॥ १८
अहिंसा सकलो धर्मो हिंसा यज्ञेऽसमाहिता ।
सत्यं तेऽहं प्रवक्ष्यामि यो धर्मः सत्यवादिनाम् ॥ १९

इति श्रीमहाभारते शान्तिपर्वणि चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

---

सुरुचिरं ( as in text ). — $^b$ ) K7 D4. 9 -लुप्ते( K7 °प्ते )-न; G2 -लब्धेन ( for -लग्नेन ). — After 15$^{ab}$, V1 repeats 14$^{cd}$. — $^c$ ) K1. 4 उल्लोक्य; K2 उल्लोक्य; B3 ( marg. ) उद्दोप्य; Da3. a4 Cp ( gloss : छित्वा, लुप्लृ छेदने इति धातोः ) उल्लोप्य ( for आलोक्य ). K6 B0. 6–9 Da3. a4 Dn1. n4 D3. 5–7 G2 M7 Cp हिंसायाः. — $^d$ ) K1 स्वर्गवासे. K6 B0. 6–9 Cp सम (B9 °मा )र्पयत्; K7 D4. 9 समर्थयन्; V1 °न्वयत्; Da3. a4 °र्थयेत्; D5 °र्प्ययत्; G3 °र्चयत् ( for °र्थयत् ).

16 $^a$ ) D4 नु ( for तु ). — $^b$ ) K2. 4 T2 -वर्षोषिते ( for °षितो ). G3 बहुवर्षेण तेन च. — $^c$ ) G2 निष्क्रितम्; Cp ( gloss : समाप्तिं ) निष्कृतिम् ( as in text ). K2. 6 Ds2 आदत्त; K7 B9 Da4 D4. 9 आधत्ते; T1 आसक्त; G2 आयंता ( for आधत्त ). ❀ Cv : निष्कृतिं, तस्य अविधिना कृतस्य यज्ञस्य पुण्यह्रासाख्यपरिहारम् । ❀ — $^d$ ) D8 तु ( for हि ). M7 -साविधि ( sic ) ( for -संविधिः ). G2 ह्यसौ यज्ञवसंविधिः ( sic ). ❀ Cp : यज्ञसंविधिः, यज्ञपूर्णताहेतुः ॥ Cs : यज्ञसंबन्धिप्रायश्चित्तम् । ❀

17 $^a$ ) K6 हि; K7 B3 Dn1. n4 D2–4. 6. 8. 9 [अ]नु- ( for तु ). — $^b$ ) G1 -सिंहात्मनस् ( for -हिंसा° ). K7 D4. 9 T1 G1–3 तथा ( for तदा ). — $^c$ ) B7 M7 ततो ( for तपो ). D7 G1–3 -व( G2 -च )न्नं ( for महत् ). — $^d$ ) K2 विज्ञिया ( sic ); K7 यज्ञियाः; D2. 7 T1 G1. 8 याज्ञिया; M1. 5–7 याज्ञिका ( for यज्ञिया ). G1 तस्माद्धिंसा मदाजया ( sic ). ❀ Cv ( reading हिंसानयज्ञिया ): अयज्ञिया न भवतीति अनयज्ञिया । यज्ञियैव हिंसा प्रशस्तेत्यर्थः । ❀

18 D7 om. ( hapl. ) 18$^b$–19$^a$. — $^b$ ) K1 यज्ञो; K2. 4 यज्ञे ( for यज्ञं ). K7 Cp याजयते; D6 °यतः; T2 °यतं ( for °यत ). M1. 5. 6 स्वकं ( for स्वयम् ). Ds1 D4. 9 यज्ञेनायाजयस्स्वयं. ❀ Cn : याजयत । अडभावः आर्षः । ❀ — $^{cd}$ ) B9 Cnp समाधाने. Dn4 तु ( for च ). K1. 2. 7 V1 D4. 9 G3 भार्यायां. D4 लेभे ( for लेभे ). Ds1 सा ( for स ). Dn1 T2 G3 तपसां; G1. 2 तपतां ( for तपसा ). T1 G1–3 M1 वरः; वरं; M1. 6 परः ( for परम् ). ❀ Cp : समाधाने इति पाठे, यज्ञसमाधाने सति । भार्याया इति तृतीयार्थे षष्ठी भार्यया सह तपसाहिंसात्मकेन स ब्राह्मणः परं परमात्मानं शुद्धितत्वज्ञानद्वारा लेभे । ❀

19 D7 om. 19$^a$ ( cf. v. l. 18 ). — $^a$ ) K1. 2. 4 D -सफलो; K7 D4. 5. 9 T G1–3. 6 M1. 5–7 -परमो ( for सकलो ). — $^b$ ) K6 यज्ञा; K7 धर्मः; D4. 9 धर्मे; यज्ञः; M1. 5. 6 यज्ञ- ( for यज्ञे ). K7 Das D4. 9 M समाहितः; T1 G1. 2 समाहिताः ( for ऽसमाहिता ). Dn1. n4 Ds D2. 3. 8 हिंसाधर्मस्तथाहितः. ❀ Cp ( reading समाहिता ): समाहिता अर्पिता, लोलुपानां काम मोक्षप्रतिबन्धाय च कपटेनारोपितेत्यर्थः । ❀ — $^c$ ) K B6. 7. 8 ( marg. ) धर्मं ( for सत्यं ). D4 तेदं; ( before corr. ) ते वः; D9 ( by corr. ) तेत्र; ( for तेऽहं ). — $^d$ ) K4 Da4 Ds1 D2. 8 Cn नो; सो ( for यो ). ❀ Cn : यो धर्म इति पाठे, किं यः सत्यवादिनां धर्मः । य इति विधेयापेक्षं पुंस्त्वम् । ❀

Colophon. Ś1 G6 missing : K3. 5 B1–5 Da Dn3. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan* : 2. 4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G M1. 5–7 मोक्षधर्म. — *Adhy. name* : K1. 2. 4 D निंदा; K6 V1 B0. 7–9 Da3. a4 Dn1 Ds D2. 5. 6. 7 यज्ञनिंदा; K7 D4. 9 हिंसाविगर्हा; B6 यज्ञनिंदा D5 हिंसाविगर्हणः; M5 अधर्मयज्ञनिंदा. — *Adhy. no.* ( figures, words or both ): K6 96; Dn1 D G1. 8 M6 99; Dn4 M1. 6. 7 97; Ds2 ( marg. ) T2 112; G2 94. — *Śloka no.* : Da4 Dn1. n4 D

# २६५

युधिष्ठिर उवाच ।

कथं भवति पापात्मा कथं धर्मं करोति वा ।
केन निर्वेदमादत्ते मोक्षं वा केन गच्छति ॥ १

भीष्म उवाच ।

विदिताः सर्वधर्मास्ते स्थित्यर्थमनुपृच्छसि ।
शृणु मोक्षं सनिर्वेदं पापं धर्मं च मूलतः ॥ २
विज्ञानार्थं हि पञ्चानामिच्छा पूर्वं प्रवर्तते ।
प्राप्य ताञ्जायते कामो द्वेषो वा भरतर्षभ ॥ ३
ततस्तदर्थं यतते कर्म चारभते पुनः ।
इष्टानां रूपगन्धानामभ्यासं च चिकीर्षति ॥ ४
ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ५
लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ६
व्याजेन चरतो धर्ममर्थव्याजोऽपि रोचते ।
व्याजेन सिध्यमानेषु धनेषु कुरुनन्दन ॥ ७
तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति ।
सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ॥ ८

C. 12. 9838
B. 12. 274[3]. 8
K. 12. 279. 8

## 265

☞ This adhy. is missing in Ś$_1$ G$_6$ (cf. v. l. 12. 263. 52; 259. 1).

1 Ds$_2$ reads 1 with the ref. on marg. — a) K$_{1.2}$ G$_1$ (before corr.) धर्मात्मा (for पापात्मा). — b) D$_8$ पापं (for धर्मं). K$_{6.7}$ Ds$_2$ D$_{5.7}$ च (for वा). B$_8$ (marg. as in text) कथं भवति धार्मिकः. — c) B$_8$ (marg.) कथं (for केन). B$_{0.8.9}$ Dn$_4$ Ds D$_{2.3.6.8}$ आयत्ते; D$_{5.7}$ आप्नोति (for आदत्ते).

2 Ds$_2$ reads the ref. on marg. — a) D$_7$ विदिताः. K$_1$ सर्वे धर्मास्; V$_1$ सर्वकर्मास्; D$_7$ G$_2$ सत्यधर्मास्. — b) G$_3$ स्तुत्यर्थम् (for स्थि°). K$_6$ V$_1$ B$_{0.6.9}$ Da$_{3.}$a$_4$ Dn$_{1.}$n$_4$ D$_{2.3.6}$ त्वं तु (D$_2$ न) पृच्छसि; K$_7$ B$_8$ D$_4$ त्वनुपृच्छसि; B$_7$ (marg.) D$_9$ त्वं (D$_9$ तु) तु पृच्छति; G$_1$ अनुपृच्छति (for अनुपृच्छसि). B$_7$ स्थित्यर्थं त्वं तुमहसि (sic). — c) K$_1$ (before corr.) च धर्मं च; K$_{1.2}$ च धर्मज्ञ (for सनिर्वेदं). — d) K$_{1.2}$ सर्वं; K$_7$ D$_{4.9}$ पाप-; G$_1$ पापान् (for पापं). D$_5$ मूलताः.

3 St. 3–13 = (var.) 3. 201. 2–11. — a) K$_{1.2.4}$ B$_8$ Dn$_{1.}$n$_4$ D$_{2.4.6.9}$ G$_2$ C$_{a.p}$ विज्ञायार्थं; C$_{s.v}$ विज्ञानार्थं (as in text). K$_{1.2}$ B$_8$ च; K$_7$ G$_2$ lacuna; Dn$_1$ तु (for हि). ❀ Cp (reading विज्ञाय अर्थं): विज्ञाय, विशिष्टत्वेन, इष्टसाधनत्वेनानिष्टसाधनत्वेन वा, ज्ञात्वा । ❀ — c) D$_8$ Cn [ए]कं (for वान्). K$_{1.2.4}$ D$_{6.7}$ वर्धते; K$_7$ V$_1$ B$_8$ (marg.) D$_{4.9}$ T G$_{1-3}$ M$_7$ वर्तते (for जायते). — d) T$_1$ G$_{1.2}$ M$_1$ दोषो (for द्वेषो).

4 a) K$_{6.7}$ V$_1$ B$_{6.8-9}$ Da$_{3.}$a$_4$ Dn$_{1.}$n$_4$ D$_8$ D$_{2-9}$ तदर्थं. B$_8$ (marg. as in text) D$_5$ यजते; D$_7$ त्यजते (for यतते). — b) G$_3$ वा लभते (for चारभते). K$_{6.7}$ B$_{0.6.7.8}$ (marg. as in text).$_9$ Da$_{3.}$a$_4$ Dn$_{1.}$n$_4$ D$_8$ D$_{2.3.5-8}$ Cp महत् (for पुनः). — c) T G$_{1.3}$ M$_7$ शब्दानां; M$_1$ इच्छानां (for इष्टानां). — d) T$_1$ G$_1$ मानसं (for अभ्यासं). D$_{2.4}$ विकि( D$_2$ °क )र्षति (for चिकी°).

5 K$_7$ repeats 5$^{ab}$ after 8$^{ab}$. — a) D$_{5.7}$ प्रभ· वते. — b) B$_8$ (marg.) मोहश्च; G$_3$ दोषाश्च (for द्वेषश्च). — K$_7$ B$_9$ Da$_{3.}$a$_4$ D$_{7.9}$ T$_1$ G$_2$ om. (hapl.) 5$^{cd}$. Ds$_2$ reads 5$^{cd}$ on marg.

6 c) B$_8$ धर्मे न (by transp.); G$_3$ न धर्मो. — d) K$_2$ Da$_{3.}$a$_4$ Dn$_4$ व्याजाधर्मं; K$_7$ व्याजकर्मं; D$_{4.9}$ व्याजधर्मं. K$_2$ वै; M$_{1.6}$ वा (for च).

7 a) K$_7$ Da$_{3.}$a$_4$ Dn$_{1.}$n$_4$ D$_{2.5-7}$ M$_{1.5.6}$ चरते; M$_7$ चरितो. — b) K$_7$ V$_1$ Da$_{3.}$a$_4$ अर्थव्याजेन (K$_7$ °जेपि); Dn$_{1.}$n$_4$ D$_{2.3.5-8}$ अर्थं व्याजेन; Ds$_2$ M$_1$ अर्थं (Ds$_2$ [by corr.] °र्थो) व्याजोपि. K$_1$ रेचते; D$_8$ सेवते; T$_2$ रोच्यते. K$_4$ अर्थव्याजिपरीचते (sic). — c) K$_2$ सेव्यमानेषु; Da$_{3.}$a$_4$ G$_1$ सिद्ध°; Ds$_1$ सिध्यमाने तु; D$_7$ विध्यमानेषु. — d) Da$_3$ lacuna; T G$_{1-3}$ धर्मेषु (for धनेषु). G$_1$ कुलनंदन; G$_2$ (also as in text) भरतर्षभ.

8 Ds$_2$ reads 8–13 (sec. m.). — b) B$_8$ (marg. as in text) करोति च; D$_4$ चिकीर्षति (for चि°). — c) K$_{2.7}$ Ds$_1$ — After 8$^{ab}$, K$_1$ repeats 5$^{ab}$.

C. 12. 9839
B. 12. 274(3). 9
K. 12. 279. 9

उत्तरं न्यायसंबद्धं ब्रवीति विधियोजितम् ।
अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ॥ ९
पापं चिन्तयते चैव प्रब्रवीति करोति च ।
तस्याधर्मप्रवृत्तस्य दोषान्पश्यन्ति साधवः ॥ १०
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स नेह सुखमाप्नोति कुत एव परत्र वै ॥ ११
एवं भवति पापात्मा धर्मात्मानं तु मे शृणु ।
यथा कुशलधर्मा स कुशलं प्रतिपद्यते ॥ १२
य एतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ।
कुशलः सुखदुःखानां साधूंश्चाप्युपसेवते ॥ १३
तस्य साधुसमाचारादभ्यासाच्चैव वर्धते ।
प्रज्ञा धर्मे च रमते धर्मं चैवोपजीवति ॥ १४
सोऽथ धर्मादवाप्तेषु धनेषु कुरुते मनः ।
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ॥ १५
धर्मात्मा भवति ह्येवं मित्रं च लभते शुभम् ।
स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति ॥ १६
शब्दे स्पर्शे तथा रूपे रसे गन्धे च भारत ।
प्रभुत्वं लभते जन्तुर्धर्मस्यैतत्फलं विदुः ॥ १७

---

वीर्यमानो. — d ) Ds2 पंडितश्चापि; B2 °श्चैव.

9 a ) Da4 उत्तमं; D4. 5. 7. 9 M7 उत्तर-. K4. 7 Da3 D4. 5. 7. 8 T2 G1 M1. 5–7 न्यायसंबंधं ( D5. 7 °धे ); D6 व्याजसंबद्धं; G2 चापि संबंधं. ❀ Cp: न्यायसंबद्धं, न्यायाभासम् ॥ Cv: उत्तरन्यायसंबद्धं, कुतर्काख्यन्यायसंबद्धम् । ❀ — b ) B8 -याजितं; Da3. a4 -योजितः; Dn1. n4 Ds D2. 3. 6. 8 M1. 5. 6 Cv -चोदितं ( M1. 6 Cv [ gloss: विपरीतया चोदितः, इदं न कुर्वित्युक्तः ] °तः ). K1. 2. 4. 7 D4. 9 प्रब्रवीति वि( K7 D4 नि )योजितं; T1 G1–3 प्रब्रवीति प्रचोदितः; M7 ब्रवीति श्रुतिगोचरः. ❀ Cp: विधियोजितं, दुर्दैवेनोपस्थापितम् । ❀ — c ) ❀ Cn: त्रिविधः, कायिको वाचिको मानसश्च । ❀ — d ) Da4 वर्धत; M7 वर्तते. K4 रोगमोहजः; K6 राजमोहितः; B8 D5. 7 रागमोहतः.

10 a ) V1 पापान्. Ds1 चैवं; T G1–3 M7 कर्म. — b ) B8 ब्रवीति न; Dn1 प्रब्रवीमि; M1. 5–7 ब्रवीति च; Cp ( gloss: अन्यस्मै उपदिशति ) प्रब्रवीति ( as in text ). — c ) G1 धर्म- ( for [अ]धर्म- ). — d ) Da3 दोषाः; G1 दोषं; M1. 6. 7 गुणा ( for दोषान् ). K1. 2 Da3 M1. 6. 7 नश्यं( Da3 °स्यं )ति ( for प° ).

11 b ) Ds1 भजते. K1. 2. 4 B9 D9 G1. 2 पापकर्मणः. — d ) K1. 2. 4 Da4 च ( for वै ).

12 a ) K7 धर्मात्मा ( for पापात्मा ). — b ) K7 पापात्मानं ( for धर्मा° ). T2 च ( for तु ). — c ) K1. 2 यदा ( for यथा ). K6 V1 B6. 7. 9 Da3. a4 D5. 7 -धर्मात्मा; T G1–3 M1. 5–7 -धर्मा सन् ( for -धर्मा स ). B8 यथा स कुशलो धर्मात्. — After 12, B6. 6. 7 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 editions ins.:

720* कुशलेनैव धर्मेण गतिमिष्टां प्रपद्यते ।

[ Da4 इष्टं. ]

13 b ) G1 अनुशासति ( for °पश्यति ). D3 प्रज्ञया व्यवस्यति; M1 सर्वान्निवानुपश्यसि. — c ) D5. 7 G1 कुशलं K7 D4. 5. 7. 9 M5 सुखदुःखेषु; T G1–3 M1. 6. 7 तु सुखार्थिय. — d ) Dn1. n4 अथ; D2 अप- ( for उप- ).

14 a ) Da4 सर्वं; Dn4 साधू-. M1. 6 -समाचारात् — b ) K1. 2 अभ्याशास्; Da4 आभासाच्. K2 प्रवर्ध. G1–3 M7 [ए]व वर्तते. — d ) T1 G1–3 om. च. समुपजीवति ( for चैवोप° ).

15 a ) K7 D4. 9 धर्मलाभाद् ( for सोऽथ धर्माद् ) Da3 अवाप्तासे; Da4 °सेव. — b ) B6. 6. 7 T G M1. 5–7 कुरुनंदन ( for कुरुते मनः ). — D7 om. 15cd–16ab. — c ) Ds1 तस्यैवं. K1. 2. 6. 7 D4. 9 M7 [आ]सिंचते G1 om. मूलं. — d ) Ds1 पश्यत; T1 G2. 3 पश्यति K1. 2. 4. 7 B8 D4. 9 T G1–3 M7 च ( for वै ).

16 D7 om. 16ab ( cf. v. l. 15 ). — a ) D5 [इ]त्येव; T1 G1. 3 ह्येषः G2 ह्येषु. — b ) K6 शुभं ( for शुभम् ). — c ) K7 D7 -लाभेषु; D4. 9 -लाभं ( for -लाभात्तु ). G2 स मित्रजनलाभं तु. — d ) D4 नंदति ( sic ).

17 G2 om. 17–20. K4. 7 B6. 6–9 Dn1. n4 D2. 6. 8. 9 T G1. 3 repeat 17ab after 19ab. — ab ) K (both times ) D5 शब्द- ( for शब्दे ). K1. 2. 4 ( both times ). 7 ( second time ) च रूपे च ( for तथा रूपे ) K6 B6. 6. 7. 9 ( last four first time ) Da3. a4 Dn1 ( last two first time ) Ds D2. 3. 6. 8 ( last four first time ) transp. तथा and रसे. V1 transp. तथा and रसे गन्धे. T1 G1. 3 ( all first time ) transp. and गन्धे. K4 ( both times ) रस- ( for रसे ). B6. 6–9 Dn1. n4 D2. 3. 6. 3 ( all second time ) Cn भावयते मनः. ❀ Cn: भावयते, चिन्तावशं करोति ।

स धर्मस्य फलं लब्ध्वा न तृप्यति युधिष्ठिर ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥ १८
प्रज्ञाचक्षुर्यदा कामे दोषमेवानुपश्यति ।
विरज्यते तदा कामान्न च धर्मं विमुञ्चति ॥ १९
सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षाय यतते नानुपायादुपायतः ॥ २०
शनैर्निर्वेदमादत्ते पापं कर्म जहाति च ।
धर्मात्मा चैव भवति मोक्षं च लभते परम् ॥ २१
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
पापं धर्मं तथा मोक्षं निर्वेदं चैव भारत ॥ २२
तस्माद्धर्मे प्रवर्तेथाः सर्वावस्थं युधिष्ठिर ।
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥ २३

C. 12. 9654
B. 12. 274(3).24
K. 12. 279. 24

इति श्रीमहाभारते शान्तिपर्वणि पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

---

— $^{c}$) ❀ Cn: प्रभुत्वं, संकल्पसिद्धत्वम् । ❀ Da3. a4 [ऽ]ज्ञं तु (for जन्तुर्).

18 G2 om. 18 (cf. v. l. 17). — $^{a}$) K4 V1 B0. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 तु धर्मं (for धर्मस्य). — $^{b}$) Dn1. n4 D2. 3 (*sup. lin.* as in text). 6. 8 हृष्यति (for तृप्यति). — After $18^{ab}$, T G1. 3 ins. (cf. $23^{cd}$):

721* धर्मे स्थितानां कौन्तेय सर्वभोगक्रियासु च ।

— $^{c}$) MSS. अतृप्यमानो; Da3. a4 अदृश्यमानो. — $^{d}$) B0 आधत्ते.

19 G2 om. 19 (cf. v. l. 16). — $^{a}$) K6 Da3. a4 D8 कामो for कामे). — $^{b}$) V1 B9 Dn1. n4 D8 D2. 3. 6. 8 रसे गंधे न (D6 च) रज्यते. — After $19^{ab}$, K4. 7 B0. 6–9 Dn1. n4 D2–4. 6. 8 T1 G1. 3 Cn repeat $17^{ab}$. — $^{c}$) K7 V1 B6 D4. 5. 7. 9 M1. 5–7 विरज्यति; B0. 8. 9 Da4 Dn1. n4 D8 D2. 3. 6. 8 विमुच्यते; B7 विवह्यते. V1 D8 यदा; D7 यथा; T2 M7 तथा (for तदा). T G1 तथा (G1 °दा) कामो; G3 दोषकामो; M1. 6 तदा कामं. — $^{d}$) D5. 7 धर्मं च (by transp.). D7 विमुच्यति.

20 G2 om. 20 (cf. v. l. 16). — $^{a}$) K4 सर्वं; B0 Dn1 D8 D2. 3. 6. 8 धर्म-; Dn4 धर्मे (for सर्व-). V1 D6 न (for च). B8 (marg. as in text) यजते. — B9 om. (hapl.) $20^{bc}$. — $^{c}$) K7 तत्र (for ततो). K1. 2 मोक्षे च (for मोक्षाय). B3 T G1. 3 M1. 5–7 ततो मोक्षे प्रयतते; Dn4 ततो मोक्षापि ययते (sic). — $^{d}$) K7 तानुपायाद्; B8 (marg. as in text) तानुपायान्. M1 अपायतः (for उपा°). ❀ Cn: न अनुपायात्, उपायाननुष्ठानात्, किं तु उपायत एव । ❀

21 $^{b}$) K1. 2. 4 Dn1 T1 G1–3 पापकर्म (T1 °र्मं).

22 $^{a}$) K7 D4. 5. 7. 9 राजन् (for तात). — $^{b}$) Da3 तन्मां; M1. 6. 7 यन्मा. — $^{c}$) D5. 7 धर्मात् (for धर्मं). K6 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 पापं धर्मस्तथा (Da3. a4 °पो) मोक्षो. — $^{d}$) K4 निर्वेदे; K6 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 निर्वेदश्.

23 $^{a}$) V1 धर्माद् (for तस्माद्). D4. 9 वर्मे; D5 धर्मात् (for धर्मे). K7 प्रवृत्तेथाः. — $^{b}$) T G1–3 सर्वावस्थो. D4 युधिष्ठिरं. — $^{d}$) D2 शाश्वतीः.

Colophon. Ś1 G6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan*: K1. 2. 4. 6. 7 V1 (marg.) B0. 6–9 Da3. a4 Dn1. n4 D8 D2–9 T G1–3 M1. 5–7 मोक्षधर्म. — *Adhy. name*: K7 चातुप्रश्निकः; Dn1. n4 D3. 6 चतुःप्राश्नि (D6 °श्नि) कः; Ds1 D2. 8 चतुःप्रासिकः; D4. 5 चातुःप्राश्निकः; M5. 6 मोक्षनिर्वेदधर्म (M5 om. धर्म) कथनं. — *Adhy. no.* (figures, words or both): K6 Dn4 M1. 6. 7 98; B7 97; Ds2 99; T2 113; Dn1 Ds1 D7 T1 G1. 3 M5 100; G2 94. — *Śloka no.*: Da4 23; Dn1. n4 D3 24; Ds1 12.

# २६६

C. 12. 9855
B. 12. 273(4). 1
K. 12. 280. 1

युधिष्ठिर उवाच ।

मोक्षः पितामहेनोक्त उपायान्नानुपायतः ।
तमुपायं यथान्यायं श्रोतुमिच्छामि भारत ॥ १

भीष्म उवाच ।

त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनम् ।
यदुपायेन सर्वार्थान्नित्यं मृगयसेऽनघ ॥ २
करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सानघ ।
एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कारणम् ॥ ३
पूर्वे समुद्रे यः पन्था न स गच्छति पश्चिमम् ।
एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ॥ ४
क्षमया क्रोधमुच्छिन्द्यात्कामं संकल्पवर्जनात् ।
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ॥ ५
अप्रमादाद्भयं रक्षेच्छ्वासं क्षेत्रज्ञशीलनात् ।
इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ ६
भ्रमं प्रमोहमावर्तमभ्यासाद्विनिवर्तयेत् ।
निद्रां च प्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ ७

---

## 266

☞ This adhy. is missing in Ś1 G6 ( cf. v. l. 12. 263. 52; 259. 1 ).

1 ᵃ) Dn4 उक्तम्; Ds1 उक्ता. — ᶜ) K2 न्यारयं (for -न्यायं). G2 तमुवाच तथा न्यारयं. — ᵈ) K6. 7 B7 Da3. a4 D4. 5. 7. 9 तत्त्वतः (for भारत).

2 G1 om. the ref. — ᵃ) K1. 2. 4 T1 G1-3 तवैव; Da3 Dn4 D2. 6. 8 त्वय्येव; D5. 7 त्वया च (for त्वय्येव). K7 महाभाग; B0. 6. 8. 9 D2. 8 °प्रज्ञ; Da4 °प्राज्ञो (for °प्राज्ञ). — ᵇ) K6 मुक्तं (for युक्तं). K2 निर्वाण-; K7 B9 Ds1 निपुन- (for °ण-). Dn4 -दर्शने (for °नम्). — ᶜ) K6 B0. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 येनोपायेन (for यदुपायेन). B0. 7 Dn1 Ds D2. 3. 5. 7. 8 सर्वार्थं (for °र्थान्). — ᵈ) K7 [अ]नित्यं (for नित्यं). D7 मृगयते (for °से). B7 कथं (for ऽनघ).

3 K2. 4 om. (hapl.) 3ᵃᵇ. — ᵃ) Hypermetric. B7. 9 हरणे (for क°). Dn4 om. या. K7 D4. 5. 7. 9 T1 G1. 3 घटस्य क( D5. 7 ह-; T1 G3 का )रणे बुद्धिर्; G2 क्षीणे घटस्य वा बुद्धिर्. — ᵇ) K7 D4. 9 पटोत्पत्तौ; T G1-3 M1. 5-7 घ( G1 वि-; M7 प )टोत्पत्त्यां (for °त्पत्तौ). T1 G1-3 तु (for न). K7 मानघ; V1 B0 Dn1. n4 Ds D2. 3. 6. 8 सा मता; T1 G1. 3 मानसी; T2 M7 सा भवेत्; G2 तामसः (for सानघ). — ᶜ) B7 एतद् (for एवं). K6 B3 Da3. a4 Ca एवं धर्माद्यु( B3 °भ्यु )पायेन ( K6 Da4 Ca °षु ); K7 Ds1 D4. 9 M1. 5. 6 एवं धर्मोभ्यु( M1. 5. 6 °प्यु )पायेन ( Ds1 M1. 5. 6 °षु ); M7 एवं धर्मो ह्युपायेन. — ᵈ) K1. 2 Da3. a4 Dn4 D2. 6. 7 T1 G3 नान्य-; K4 नाना-; Ds1 नान्यो (for नान्यद्). T1 G1. 3 -धर्माद्धि; T2 धर्मो हि; G2 धर्मोऽस्ति (for धर्मेषु). ❀ Cn : धर्मेषु, मोक्षधर्मेषु । ❀

4 ᵃ) G2 पूर्वं (for पूर्वे). D4 या (for यः). — ᵇ) D2 transp. न and स. — ᶜ) Da3 D7 G1 एक- (for एकः). K2 पंक्ता; D5 पथा (for पन्था). — ᵈ) K1. 3 निगदतः (for विस्तरतः).

5 ᵃ) K1. 2. 4 उच्छिद्य ( K2 °त्य ); Dn1 D6 उच्छिद्यात् (for °न्द्यात्). — ᵇ) K2 कर्म; G1 M1 काम- (for कामं). — After 5ᵃᵇ, K7 D9 read 6ᶜᵈ. — ᶜ) K7 सत्त्वं (for सत्त्व-). B0 -संसेचनाद् (for °वनाद्). D9 वीरो (for धीरो). G2 सत्त्वं संसवनाद्विद्धि- — ᵈ) K4 उच्छेदुम्; Da3 Dn1. n4 Ds D2. 3. 6. 8 च च्छेत्तुम्; G2 क्षाच्छेत्तुम् (for उ°). Dn4 अर्हसि.

6 ᵃ) T2 रक्ष (for रक्षेत्). K1. 2. 4 अहिंसया भयं ( K1 °क्षं ) रक्षेत्. ❀ Cn : भयं लोकापवादजां लज्जाम् । ❀ — ᵇ) D5. 7 क्षेत्रं; Ca ( gloss : प्राणक्रियां ) श्वासं ( as in text ). G2 क्षेमाज्ञ- (for क्षेत्रज्ञ-). K1 2. 4 Ca -सेवनात्; M1 -दर्श° (for -शील°). ❀ Ca : क्षेत्रज्ञसेवनात्, आत्मन्येव मनोनिवेशनात् मनःसहचरस्य वायोरपि निवृत्तिः सुकरा । तेन वायुनिरोधादपि मनसा आत्मनि निवेशनम् । ❀ — G1 om. (hapl.) 6ᶜ-8ᵇ. K7 D9 read 6ᶜᵈ after 5ᵃᵇ. — ᶜ) K2 Da3 Dn4 T2 G2 M1 इच्छा (for इच्छां). — ᵈ) K1. 2 D4. 9 धर्मेण; Da3 धैर्येन. K1 [ए]व; Dn4 च (for वि-).

7 G1 om. 7 ( cf. v. l. 6 ). Ds1 D2. 5. 8 G3 om. (hapl.) 7ᵃᵇ. — ᵃ) B8 त्रासं; D4 भ्रमे; T1 G3 सर्वं; T2 श्रमं (for भ्रमं). K4. 6 B0. 6-9 Da3. a4 Dn1. n4 Ds D3. 6. 7 संमोहम् (for प्र°). ❀ Cp:

उपद्रवांस्तथा रोगान्हितजीर्णमिताशनात् ।
लोभं मोहं च संतोषाद्विषयांस्तत्त्वदर्शनात् ॥ ८
अनुक्रोशादधर्मं च जयेद्धर्ममुपेक्षया ।
आयत्या च जयेदाशामर्थं सङ्गविवर्जनात् ॥ ९
अनित्यत्वेन च स्नेहं क्षुधं योगेन पण्डितः ।
कारुण्येनात्मनो मानं तृष्णां च परितोषतः ॥ १०
उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत् ।
मौनेन बहुभाष्यं च शौर्येण च भयं जयेत् ॥ ११
यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा ।
ज्ञानमात्मा महान्यच्छेत्तं यच्छेच्छान्तिरात्मनः ॥ १२
तदेतदुपशान्तेन बोद्धव्यं शुचिकर्मणा ।
योगदोषान्समुच्छिद्य पञ्च यान्कवयो विदुः ॥ १३
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ।
परित्यज्य निषेवेत तथेमान्योगसाधनान् ॥ १४

C. 12. 9868
B. 12. 273(4). 14
K. 12. 280. 14

---

लावर्त, आ समन्ताद्वर्तत इति व्युत्पत्त्या अनेककोटिस्पर्शिनं संशयम् ।·❀ —b) V1 Bo. 6–9 Da3. a4 Dn4 Ds2 D3. 7 T1 G3 हि (for वि-). D6 ·वर्जयेत् (for -वर्त°). —c) D4. 9 T2 वा (for च). K7 T1 G3 M7 [अ]-प्रतिभां; D7 प्रतिमां (for °भां). ❀ Ca: प्रतिभा कवित्वहेतुः आत्मज्ञानप्रतीपः ॥ Cn: प्रतिभां, अन्यानुसंधानम् ॥ Cs: प्रतिभा, समाधिवेलायां बाह्यस्मृतिः । ❀

8 G1 om. 8ab (cf. v. l. 6). —a) K1 युक्ताहारात्; K2. 4 ज्ञानाभ्यासात्; K7 D4. 9 उपद्रवं; B7 °द्रवास्. D5. 7 घोरान्; G2 लोकान् (for रोगान्). —b) M7 हितं (for हित-). K1. 2 हितं जीर्णादिवाशनात्; D8 हितजीर्णामिता°. —c) G2 lacuna; M6 लोभ- (for लोभं). Da3 स (for च). G2 संतोषं. —d) T1 G1. 2 विनयांस् (for विष°).

9 a) K1 च धर्मं; B8 (marg.) न धर्मं (for अधर्मं). —b) Da3. a4 जायेद्; D7 जपेद् (for जयेद्). K1. 2. 4 Bo. 8 (marg.) D5. 7 T1 अपेक्षया; Da3 Dn1. n4 Ds D2. 3. 6. 8 Cn (gloss: परिपालनेन) अवे° (for उपे°). ❀ Ca: उपेक्षया, फलानभिसंधानेन । ❀ —c) D9 आयत्यां (for °त्या). D7 वर्धयेद् (for च जयेद्). ❀ Ca: आयत्या, उत्तरकालभाविफलेन दोषवत्तया ॥ Cv: आयत्या, आसमन्तात्, अयत्या, अप्रयत्नेन । ❀ —d) K7 Da3. a4 M1. 6 अर्थं· (for अर्थं). K1 ·विवर्तनात्; M7 -विसर्जं° (for ·विवर्जं°). B9 अनर्थं संगवर्जनात्; D7 अर्थं संगं च वर्जयेत्; G2 अर्थं संभववर्जनात्.

10 a) Da3 अनितत्वेन. —b) K4 क्षुधा; K6. 7 V1 Bo. 6–8 Dn1. n4 Ds D2. 3. 5–8 M6 क्षुधां (for क्षुधं). T2 पंडितं. ❀ Cn: योगेन, वायुनिग्रहेण ॥ Cs: योगेन, आत्मदर्शनेन। ❀ —c) T2 ज्ञानं (for मानं). —d) K7 Da3. a4 तृष्णा. K1 M1. 6. 7 परितोषितः.

11 a) Da4 उद्धानेन; D4. 9 उच्छा° (for उत्था°). K3 यजेत्; Ds1 जयत् (for जयेत्). K7 तंद्रां; तंद्रां (for तन्द्रीं). —b) T2 वितर्कान्. K7 D4. 9 निर्णयाज्; Da4 निश्रयो (for निश्चयाज्). M6 त्यजेत् (for जयेत्). T1 G1. 3 विवक्षां मूलतो जयेत्; G2 तं विवक्षा हिता जयेत्. — Da4 om. (hapl.) 11cd; B8 reads it on marg. —c) K2 बहुभाषं; T1 G1. 3 °भाषं (for °भाष्यं). —d) K7 D4. 9 धैर्येण (for शौर्येण). K1 (also as in text) भवेत्; K4. 6 V1 Bo. 6. 7. 8 (marg.). 9 Da3 Dn1. n4 Ds D2. 3. 6–8 T2 G3 त्यजेत् (for जयेत्).

12 With 12, cf. Kaṭha Up. 1. 2. 13. —a) K4 इच्छेद्; B8 D5. 7 जयेद्; G1 यजेद्; G2 गच्छेद् (for यच्छेद्). K6 -मनसं. —b) K4 ता; G2 त्वां (for तां). D5. 7 जयेज् (for यच्छेज्). Ds1 यां यच्छे- (for तां). ❀ Cs: ज्ञान· ज्ञानचक्षुषां; M7 मनो ज्ञानेन चक्षुषा. ❀ Cs: ज्ञान· चक्षुषा, प्रत्यगात्मरूपेण । ❀ —c) G2 आत्मन् (for आत्मा). ❀ Ca: महान् अशेषविशेषालोचकः । ❀ —d) M1. D7 तां जयेत् (for तं यच्छेत्). T1 G1–3 ज्ञानम्; M1. 5. 6 शांत (for शान्तिर्). M1. 6 आत्मनि (for °नः). — For 12cd, Dn1. n4 Ds T2 यच्छेच्छांत्या तमात्मनः. — For 12cd, Dn1. n4 Ds D2. 3. 8 Cn. s subst.: while D7 ins. after 12cd:

722* ज्ञानमात्मावबोधेन यच्छेदात्मानमात्मना ।

13 a) T1 G1–3 एवम्; T2 पुनम् (for एतद्). —b) G2 शुद्ध°; M6 तु वि· (for शुचि·). D2. 4 -कर्मणी (D4 °णः); D9 °णां. —c) Da4 G1 -दोषात् (for ·दोषान्). K2 समुच्छित्य; T G1–3 M5–7 समुच्छि- (T1 G2 °च्छि )यात्; M1 °च्छिद्य (for °च्छिद्य). —d) T1 G1 पंचधा; G2 पंचतां (for पञ्च यान्).

14 a) B8 (marg.) भयं लोभं (for च लोभं च). M1. 5–7 मोहं (for स्वप्नं). —b) K1 भये; B8 (marg.) तथा (for भयं). —c) G2 परित्यज्य (for °त्यज्य). —d) Bo Dn1. n4 Ds D2. 3. 6. 8 यतवाग्; G2 तदेमान्; M8 यथे° (for तथे°). Da4 D5. 7 -आसनात् (for -साधनान्). K1. 3 तदिदं योगसाधनं.

C. 12, 9881
B. 12, 276(5). 8
K. 12, 281. 8

ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ।
शौचमाहारतः शुद्धिरिन्द्रियाणां च संयमः ॥ १५
एतैर्विवर्धते तेजः पाप्मानमपहन्ति च ।
सिध्यन्ति चास्य संकल्पा विज्ञानं च प्रवर्तते ॥ १६
धूतपापः स तेजस्वी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ १७
अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम् ।
अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः ॥ १८
एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः ।
तथा वाक्कायमनसां नियमः कामतोऽन्यथा ॥ १९

इति श्रीमहाभारते शान्तिपर्वणि षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

## २६७

भीष्म उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं देवलस्यासितस्य च ॥ १
आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरः ।

15 [a]) K1 मौनम्; K2.4 मानम्; K7 D4.9 दानम् (for ध्यानम्). K7 D9 ध्यानं; D4 ध्याने (for दानं). — [b]) K1 सत्ये (for सत्यं). — [c]) K2 आहरतः; K6 B0.7.9 Da4 आचा(Da4 °च)रतः; D5.7 च मनसः; T1 G3 आचारसं-; T2 G1.2 M1.5–7 आहारसं- (for °रतः). K2 सिद्धिर्; G2 -शुद्धिम् (for -शुद्धिर्). — [d]) K7 D4.9 संयमं; Da4 संयशः.

16 [a]) K1.2.4 जंतुः (for तेजः). — [b]) K4.7 B0.7 Dn1.n4 D8 D2–9 उपहंति (for अप°). — [c]) K7 सिद्ध-; D4.5.7.9 तस्य; G2 चान्य- (for चास्य). — [d]) T1 प्रवर्तयेत्.

17 [a]) K1.4 D5.7 M1.5–7 धू(K1.4 धु)तपाप्मा स; K2.6 धुतपापः स; K7 D4.6 धुतपाप्मा सु-. — [c]) K2 om. कृत्वा. — [d]) K1 निनिवेद्; D6 निषीदेद्; D7 निलीयाद्; G2 निवीषेद् (for निनी°). K1 G3 ब्रह्मणः (for ब्र°). ❀ Cn: निनीषेत्, नेतुमिच्छेत्, आत्मानम् । कुत्र, ब्रह्मणः पदम् । ❀

18 [a]) K6 अगूढत्वम् (for अमू°). B7 अनंदत्वं; B9 अशंकित्वं; Da3.a4 Dn4 असंग(Dn4 °गी)त्वं (for °सङ्गित्वं). — [b]) K6 B7.8 T1 G1 -विवर्जितं; D7 G2 -विवर्जितः (for °र्जनम्). — [c]) G2 अनैश्यम् (for अदैन्यम्). B9 अन- (for अनु-). B8 (marg. as in text) अपैशुन्यमदीनत्वम्. — [d]) T1 G1 अनुद्योगो (for °द्वेगो). K1.2 V1 B9 D5.7 व्यवस्थितः (for °स्थितिः).

19 [a]) T G1.3 वि- (for हि). — [c]) Dn4 Ds1 -मनसा (Ds1 °सी) (for °सां). T1 G1–3 तथा विज्ञेयो (T1 °धो यो; G2 °धाय) मनसा. — [d]) K6.7 V1 B0.6–1 Da3.a4 D4.6.9 नियमाः (for °मः). Da3 कामतवो; Da4 कामयतो; T1 G1–3 M1.5–7 कापथो (for कामतो). K1.2 यथा (for ऽन्यथा). ❀ Cn: कामतोऽन्यथा, कामवैपरीत्येन, निष्कामः नियमः, योगः कर्तव्यः । ❀

Colophon. Ś1 G6 missing: K3.5 B1–5 Da1.a1 Dn2.n3 D1 G4.5 M2–4 absent. — *Sub-parvan:* K1.2.4.6.7 V1 B0.6.8.9 Da3.a4 Dn1.n4 Ds D2–9 T G1–3 M1.5–7 मोक्षधर्म. — *Adhy. name:* K1 M7 चतुष्प्रातिकः; K2.4 V1 B0.8 M5.6 चतुष्प्राप्तिकः; K6 B0.7.9 Da3.a4 चतुष्प्राश्निकः; K7 Dn1.n4 D8 D4.9 योगा(Dn4 गोपा)चारानुवर्णनं; D2.3.8 योगाचारानुवर्णनं चतुष्प्राप्ति(D8 °ति)कः; D5 योगाचारवर्णनः. — *Adhy. no.:* (figures, words or both): K6 B7 Dn4 M1.6.7 99; Dn1 Ds1 D7 T1 G1.3 M5 101; Ds2 100; T2 114; G2 95. — *Śloka no.:* Da4 Dn1 D8 19; Dn4 20.

## 267

☞ This adhy. is missing in Ś1 G6 (cf. v. l. 12. 263. 52; 259. 1).

1 [a]) K7 [उ]दाहरति. — [c]) Da4 संवादे. — [d]) D5.7 देवलस्य च भारत.

2 [a]) T G1–3 असितं. K1.2 D4.9 बुद्धं; K6 B0.9 Da3.a4 D5.7 दृष्ट्वा; T G1–3 बुद्ध्वा; M1.5–7 बुध्वा (for बुद्धं). — [b]) K1.2.7 D4.9 बुद्धो; V1 Dn4 lacuna; D8 बुद्ध्या; M1.5–7 Cp (gloss: बोधयुक्तं)

नारदः परिपप्रच्छ भूतानां प्रभवाप्ययम् ॥ २
कुतः सृष्टमिदं विश्वं ब्रह्मन्स्थावरजङ्गमम् ।
प्रलये च कमभ्येति तद्भवान्प्रब्रवीतु मे ॥ ३
असित उवाच ।
येभ्यः सृजति भूतानि कालो भावप्रचोदितः ।
महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः ॥ ४
तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः ।
एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयम् ॥ ५
विद्धि नारद पञ्चैताञ्शाश्वतानचलान्ध्रुवान् ।
महतस्तेजसो राशीन्कालषष्ठान्स्वभावतः ॥ ६
आपश्चैवान्तरिक्षं च पृथिवी वायुपावकौ ।
असिद्धिः परमेतेभ्यो भूतेभ्यो मुक्तसंशयम् ॥ ७
नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयम् ।
वेत्थ तानभिनिर्वृत्तान्षडेते यस्य राशयः ॥ ८

C. 12. 9879
B. 12. 275(4). 15
K. 12. 280. 15

---

बुद्धं (for बुद्ध्या). D4.5.7.9 मतिमतां (for बुद्धि°). K5 Bo.6.7.9 Da3.a4 Dn1.n4 D3 D2.4.6.8.9 वर. —[c]) Da3 नारद; G1 नारदं. K7 Dn4 परिपप्रच्छ; Da3 प्रतिपप्रच्छ. —[d]) K1.2 T2 प्रभवाप्ययौ; B7 D3 D6 Cap Cpp ([last two] gloss: अा, समन्ततो ययं लयस्थानम्) प्र(D6 च)भवाव्ययं.

3 = (var.) 12. 175. 1; 12. 502*. Before 3, K1.6 Bo.6-9 Da3.a4 Dn1.n4 D3 D2.3.5-8 T G1-3 ins. नारद उवाच. —[a]) Da3 कुता (for कुतः). K2 सृष्टम्; B3 सृष्टिम्. T2 सर्वं (for विश्वं). ❀ Cn: कुतः इत्यवान्तरकारणप्रश्नः । ❀ —[b]) Da3.a4 M7 ब्रह्म°; T G1-3 जगत् (for ब्रह्मन्). —[c]) T G1-3 किमभ्येति (for कमभ्येति). ❀ Cn: कमभ्येतीति पार्यन्तिकोपादानकारणप्रश्नः । ❀ —[d]) Da4 यद्भवान्; T G1-3 भग° (for तद्भ°).

4 T G1-3 M1.6-7 देवल (for असित). —[a]) K4 एभिः; T1 G1 अद्भ्यः (for येभ्यः). K2 सृजसि. —D8 om. (hapl.) 4[b]–5[a]; V1 reads the same on marg. —[b]) K4 Dn1 D3 (before corr.) काले. B1 भावः; G2 न्याय- (for भाव-). D4.9 °प्रणोदितः. K3.7 V1 D2 काल आत्मप्रचोदितः (= 5[b]); G1.2 का(G1 क)लोद्भाय प्र°. ❀ Cn: कालश्चतुर्युगात्मा । अधर्मे रतः, अधर्मं तिरयन्नुः, धर्मारम्भी, धर्मे रत इति चतुर्विधः कलिद्वापरत्रेताकृतयुगसंज्ञः । ❀ ❀ Cp: भावप्रचोदितः, भावेन परमात्मना प्रचोदितः । ❀ — D2 om. (hapl.) 4[c]–5[b]. —[c]) Da3 T2 पंचैते. —[d]) K7 भूतपंचमाः (for °चिन्तकाः).

5 D3 om. 5[a]; D2 om. 5[ab] (cf. v. l. 4). V1 reads 5[a] on marg. —[a]) K1.2 Da4 G2 येभ्यः; K4 एभिः; T1 G1 एभ्यः. —[b]) B3 (marg. as in text) सार्थं; Dn4 T1 G1-3 आत्मा; M1.5-7 आत्म-. —M1.6 om. 5[cd]. M5 reads 5[cd] after 7[ab]. —[c]) K2 एते येभ्यः; K7 D4.5.7.9 भूतेभ्यो यः. G1-3 M5 Cv यत् (for यः). Dn4 पादम्; M5 ब्रूयस् (sic) (for ब्रूयाद्). K6 B6.7.9 तेभ्यो यः परमं ब्रूयाद्. ❀ Ca: परं, प्रकृत्यादि ॥ Cn: चेतनमीशं, अचेतनं प्रधानं वा ॥ Cv: परमन्यदज्ञानकारणं ये ब्रूयुः ते असत्यं ब्रूयुः । ❀ —[d]) Dn4 corrupt. D2 M7 om. (hapl.) दसद्ब्रूया. D5 अस्य (for असद्). D7 संशयी. M5 तेसद्ब्रूयुरसंशयं.

6 [a]) G2 वेद्मि; M1.5-7 तद्धि (for विद्धि). D31 पंचैतान् (for °तान्). —[b]) G2 शाश्वतानां च बांधवान्. ❀ Cp: शाश्वतान्, नित्यान्, कार्यप्रवाहरूपेण । ❀ —[c]) K6 रूपान्; K7 D4.9 T2 G1-3 M1.5-7 रश्मीन् (for राशीन्). ❀ Cn: महतः, महत्तत्त्वाख्यस्य बुद्धिसूक्ष्मस्य । तेजसः, सत्त्वप्राधान्येन प्रकाशमयस्य । ❀ —[d]) G2 कालपृष्ठान्.

7 [a]) K6 V1 Bo.3-9 [अं]तरीक्षं; K7 D8 °री(D3 °रि)क्षम्. —[b]) K7 (before corr.) वायुरेव च; Da3.a4 ह्युपपावकौ; T2 G1.3 पावकानलौ. —After 7[ab], M5 reads 5[cd]. —[d]) B6-9 असिद्धेः; D5.7 संसिद्धिः; D6 नासीच्च; T1 असिद्धिं; T2 असद्धिः; Cnp अा सिद्धेः (for असिद्धिः). V1 Dn1.n4 D3 D2.8.3 G2 Cn (Cnp as in text) ना(G2 आ)सीद्धि परमं तेभ्यो. —[d]) K6 नात्र संशयः; T2 G2 मुक्तिसंशयं; Cp मुक्तसंशयः.

8 D2 om. 8. K1.2.4 om. (hapl.) 8[ab]. V1 reads 8[ab] on marg. —[a]) D3 D7 T G1-3 M1.5-7 सोप- (for नोप-). D7 T1 G1.3 तु (for वा). K7 D7 T G1-3 M5-7 युक्त्यासद् (T2 G2 °न्न्); V1 D5 युक्त्या-वा (by transp.); D4.9 M1 युक्त्या स. —[b]) D8 त्वसद्वाद; D7 T G1-3 ब्रूयादसद् (for D4.9 M1.6-7 असद्ब्रूयाद्; त्वसद्ब्रूयाद्). — Da4 om. 8[cd]. —[c]) K4 वेत्थैतान्; K6 विद्धयैतान्; K7 D4.9 विद्धयेतान्; G1 वेत्तुं तान्; G2 वेत्तानाम् (for वेत्थ तान्). K7 D4.9 अभिनिर्वृत्तं; Cv D5.7 यस्यैतानथ निर्वृत्ताः. —[d]) T2 षडेते. [illegible]

C. 12. 9882
B. 12. 276(5). 9
K. 12. 281. 9

पञ्चैव तानि कालश्च भावाभावौ च केवलौ ।
अष्टौ भूतानि भूतानां शाश्वतानि भवाप्ययौ ॥ ९

अभावाद्भावितेष्वेव तेभ्यश्च प्रभवन्त्यपि ।
विनष्टोऽपि च तान्येव जन्तुर्भवति पञ्चधा ॥ १०

तस्य भूमिमयो देहः श्रोत्रमाकाशसंभवम् ।
सूर्यश्चक्षुरसुर्वायुरद्भ्यस्तु खलु शोणितम् ॥ ११

चक्षुषी नासिकाकर्णौ त्वग्जिह्वेति च पञ्चमी ।
इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः ॥ १२

दर्शनं श्रवणं घ्राणं स्पर्शनं रसनं तथा ।
उपपत्त्या गुणान्विद्धि पञ्च पञ्चसु पञ्चधा ॥ १३

रूपं गन्धो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः ।
इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः ॥ १४

रूपं गन्धं रसं स्पर्शं शब्दं चैतांस्तु तद्गुणान् ।
इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते ॥ १५

चित्तमिन्द्रियसंघातात्परं तस्मात्परं मनः ।
मनसस्तु परा बुद्धिः क्षेत्रज्ञो बुद्धितः परः ॥ १६

---

K1. 2 T G1–3 M1. 7 तस्य (for यस्य). Dn1 धातवः; D5. 7 हेतवः; T G1–3 M1. 7 रश्मयः (for राशयः).

9 a) K1. 2. 4. 7 D4. 5. 7. 9 T2 चै( K4 वै )तानि; B6. 8. 9 Da3 Cp [ए]वैतानि; Da4 [ए]वं तानि; T1 G1–3 भूतानि; M1. 5–7 [ए]तानि हि (for [ए]व तानि). K1 (before corr.) कालाश्च; Da3. a4 कालं च; Dn4 कालस्य; G2 °श्चेद् (for °श्च). — b) K1. 2. 4 V1 केवलं; Da3. a4 कारणौ. ❀ Cn: भावो, भावनं, पूर्वसंस्कारः। अभावोऽज्ञानम् ॥ Cv: भवत्येभ्यो जगदिति भावः, सुकृतदुष्कृतात्मकं कर्म। अभावः प्रागभावः। ❀ — d) K1. 2. 4. 7 D4. 9 भवाप्यये; V1 B6–8 D5. 7 °स्यये; B0. 9 Dn1 D8 D2. 3. 8 °स्ययौ; Da3. a4 भवंत्यये; M5. 6 भवाव्ययौ. D6 शाश्वताश्चाभिवाप्यये.

10 a) K1. 4 Da3. a4 स्वभावाद्; V1 B6–9 D0 अभाव· (for °वाद्). T1 G1–3 भावितेष्वेषु; M5 °तं चैव (for °तेष्वेव). Dn1. n4 D8 D2. 3. 5. 7. 8 अभावं यां( D5 °वाद्यां )ति तेष्वेव ( D3 भूतानि ); T2 अथायुरच्छावितेष्वेषु (sic). ❀ Cv: अभावः नाशः, तेन भाविता उत्पत्तिः, अभावभाविता। ❀ — b) Dn4 भूतेभ्यः; D9 (marg.) त्रयश्च (for तेभ्यश्च). K1. 2. 4 V1 B7. 9 G1. 2 प्रभवति. — c) Da3 विनष्टे; G1 विनिष्टो. Da4 Bom. Kumbh. ed. [ऽ]प्यनु (for ऽपि च). T2 तान्येवं (for °व). G2 ·अपि शिष्टो विचेतान्ये. — d) ❀ Ca: पञ्चधेति वचनं प्रत्यक्षदृष्टत्वार्थम्। ❀

11 a) K2 भूमिश्रयो. G3 देहं. — V1 reads 11b–13d on marg. — b) K2 Ds1 श्रोतुम् (for श्रोत्रम्). — c) Dn4 corrupt. K1 T2 सूर्याश्; K4 V1 B3 Dn1 Ds1. s2 (before corr.) D2. 3. 6–8 T1 G3 सूर्याच् (for सूर्यश्). B6 अभूद् (for असुर्). K1. 4. 6 V1 B0. 6–9 Da4 Dn1 D8 D2. 3. 6–8 T G1–3 वायोर् (for वायुर्). — d) D7 अव्यक्तः; T1 G1. 3 अद्भिस्तु (for अद्भ्यस्तु). T1 G1–3 लघु (for खलु).

12 V1 reads 12 on marg. — a) B1 चक्षुं[...] Dn4 °षा. V1 D6 नासिके; Da3 G1 नाशि( G1 °सि )[...] (for नासिका·). K1. 2. 4 ·श्रोत्रे (for ·कर्णौ). — b) [...] V1 B6. 7 Da3. a4 D4. 9 पंचमं. D5. 7 त्वचं जिह्वेति पं[...] — D7 om. (? hapl.) 12c–13d. — d) K1 ज्ञाति[...] G3 भूतानि (for ज्ञानानि). ❀ Cv: ज्ञानानि, ज्ञा[...]येभ्यस्तानीति व्युत्पत्त्या ज्ञानकरणानि। ❀

13 D7 om. 13 (cf. v. l. 12). V1 reads 13 o[n] marg. — a) Da4 दर्शन·. K1. 7 G2 प्राणं (for घ्रा[णं]). — b) D2 तदा (for तथा). — c) Da4 corrupt. G[...] उपपत्य (for °त्त्या). — d) B9 पंचमं (for पञ्चधा).

14 a) T1 G1–3 M7 चैव (for स्पर्शः). — b) G[...] शब्दं; M7 स्पर्शश् (for शब्दश्). K1. 4 [इ]ह; D[...] [अ]स्तु (for [अ]थ). Da3. a4 D2 T1 सद्गुणाः. — [...] D2. 3 पंच वा (for पञ्चधा). Da3 om. (hapl.) पञ्[...]

15 D5. 7 om. (hapl.) 15ab. — a) G2 गंधा[...] (for गन्धं रसं). T1 रस· (for रसं). G1. 3 रूपगं[...] ( G3 °धं )रसस्पर्शः. — b) Da4 M7 शब्दश्. K6 V[1] B0. 6–8 Dn1. n4 D8 D2. 3. 6. 8 M1. 5–7 [ए]वाथ; Da[3.] a4 [ए]तास्तु. K7 Da3 तद्गुणाः. T1 G1. 3 शब्दांश्चैतांश्च तद्गु[...]णान्; G2 corrupt. — c) ❀ Cv: न बुध्यन्ते, स्वस्व[...] न बोधयन्ति। ❀ — d) Da3 क्षेत्रज्ञैस; Ds1 क्षेत्र[...] B3 तांस्तु; G2 तु वि· (for तैस्तु). K7 D6. 9 बुध्यति[...]

16 D4 om. 16. — a) G1. 2 वित्तम्. G3 ·संभूता[...] (for ·संघा°). — b) T1 परस्. Da3 om. (hapl.) तस्मात्परं. T G1–3 M7 मनः परं ( G2 °रः ) (by transp.) — d) Ds1 D2. 3. 6. 8 T2 G1. 2 परं.

17 a) Ds1 D6 चिंतयते (for चेत°). Da4 D9 जंतु[...] ❀ Ca: चेतयते, विषयदर्शनमात्रं चेतना। ❀ —[...] K1. 2 इंद्रियान्विषयैः पृथक्. — d) K6 असद् (fo[r] [...]मय). — K7 D6 om. (hapl.) 17cd. — e) D[...]

एवं चेतयते जन्तुरिन्द्रियैर्विषयान्पृथक् ।
विचार्य मनसा पश्चादथ बुद्ध्या व्यवस्यति ।
इन्द्रियैरुपलब्धार्थान्सर्वान्यस्त्वध्यवस्यति ॥ १७

चित्तमिन्द्रियसंघातं मनो बुद्धिं तथाष्टमीम् ।
अष्टौ ज्ञानेन्द्रियाण्याहुरेतान्यध्यात्मचिन्तकाः ॥ १८

पाणिपादं च पायुश्च मेहनं पञ्चमं मुखम् ।
इति संशब्द्यमानानि शृणु कर्मेन्द्रियाण्यपि ॥ १९

जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते ।
गमनेन्द्रियं तथा पादौ कर्मणः करणे करौ ॥ २०

पायूपस्थौ विसर्गार्थमिन्द्रिये तुल्यकर्मणी ।
विसर्गे च पुरीषस्य विसर्गे चाभिकामिके ॥ २१

बलं षष्ठं षडेतानि वाचा सम्यग्यथागमम् ।
ज्ञानचेष्टेन्द्रियगुणाः सर्वे संशब्दिता मया ॥ २२

इन्द्रियाणां स्वकर्मभ्यः श्रमादुपरमो यदा ।
भवतीन्द्रियसंन्यासादथ स्वपिति वै नरः ॥ २३

इन्द्रियाणां व्युपरमे मनोऽनुपरतं यदि ।
सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् ॥ २४

सात्त्विकाश्चैव ये भावास्तथा राजसतामसाः ।

C. 12. 9898
B. 12. 276(S).25
K. 12. 281. 25

---

G1-3 उपसृष्टार्थान्; M1. 5-7 °लभ्यार्थान्. —f) K1. 2. 4 दत्वा यस्; D4. 5. 7. 8 M1. 5 मत्वा यस्; T G1. 3 M6 मत्वा यं; M7 बुद्ध्या यं (for सर्वान्यस्). V1 मत्वा यस्तु व्यवस्यति; B0 सत्यवांस्तु व्य°; Dn1. n4 D8 D2. 3 बुद्धिमांस्तु व्य°; G2 मत्वा यत्वव्यवस्थितः.

18 a) D4 वित्तम्. K2 इंद्रियं. K2 °lacuna; D5. 7 ·संस्थानं (for ·संघातं). —b) K7 V1 B0. 9 Dn1. n4 D4. 5. 7. 9 T1 G1. 3 बुद्धिस्. K1. 4. 7 B0 Dn1. n4 [अ]ष्टमं; D8 D4-7. 9 T G1. 3 [अ]ष्टमीः. —d) K6 अंतानि (for एतानि). K1 आध्यास्य; K6 आध्यात्म·.

19 a) D4. 9 T G1. 2 M7 पाणिं (for पाणि·). K6 पायूश्च; K7 D9 T G1-3 M7 पायुं; Dn4 पादुश्च (for पायुश्च). —b) K1 Da3. a4 Dn4 सुखं (for मुखम्). —c) K1. 2. 4 एवं (for इति). K1 शंशस्यमानानि; K1. 4. 7 D8 संशद्ब°; K6 संचित्य°; Da3. a4 D2. 6 सशब्द°; T2 संकल्प्य°; G2 संशस्य° (for संशब्दय°). —d) T G1-3 पंच (for शृणु). Ds1 reads कर्मेन्द्रियाण्यपि twice. G2 च (for [अ]पि).

20 a) K2 जल्पनाभ्यवहार्थं च; K4 D6 T2 G1. 3 °नाभ्य(T2 °काद्व्य-; G3 °नाद्व्य)वहारार्थं; Da3. a4 °ना(Da4 °ता)भ्यवहारोयं; G2 ज्वलनाभ्यवहारार्थं. —b) Da3. a4 सुखम् (for मुखम्). D4 om. from च्यते up to न्द्रिये तु (in 21b). —c) Hypermetric. G1 मनेंद्रियं; G2 गमनेंद्रिये. T2 यथा; G2 तदा (for तथा). —d) Da4 कर्मणा; T1 G1. 3 कर्मणां.

21 D4 om. up to न्द्रिये तु (in 21b) (cf. v. l. 20). —a) V1 Dn4 D2. 3. 6. 8 पायूपस्थ·; B0 Dn1 °पस्थं; T2 M1. 5-7 पायूपस्थे. B8 (orig.) विसर्गार्थे; B8 (marg.) M1. 5-7 °गार्थे (for °गार्थम्). — K4 (before corr.) Dn1. n4 Ds2 D2. 8 G3 M1 तुल्यकर्मणि; Ds1 °कर्मणां. —c) D4. 9 विसर्गं च; D5. 7 °र्गो वै (for °र्गे च). —d) K7 विसर्गश्च; B8 विषये. B0 D4 वा (for च). K6 V1 Dn1. n4 D2. 3. 5. 6. 8 [अ]पि (for [अ]भि·). K6 D6 कामुके (for ·कामिके).

22 a) K1 बले; D5. 7 मनः (for बलं). K1 षष्टे. D5 षडैतानि. T G1-3 मनःषष्ठान्यथैता(G3 °तीका)नि; M1. 5-7 बलषष्ठान्यथैतानि. ❀ Cn: बलं पञ्चवृत्तिः प्राणः। एतेन, सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च (सां. का. 29) इति सांख्यानां संमतः प्राणस्येन्द्रियानतिरेकपक्षः परास्तः। ❀ —b) Dn1 यथा मम; T1 G1 य(G1 अ)थागतं; M7 ऽयथागमं (for यथा°). —c) B8 Da3 Ds2 D2. 5-7 M7 ज्ञानं (for ज्ञान·). K2 G2 ज्ञानं (G2 इति) चाष्टेंद्रि·; V1 B0 D6 ज्ञाने चापींद्रि°. —d) K1. 2. 4 यगुणाः; B0 D2. 3 (before corr.). 6 T G1. 2 सर्वेषां शब्दितां मया (Da3 मायाः).

23 a) K2. 6 Dn4 स्वकर्मेभ्यः. —b) K7 यथा (for यदा). —c) D6 भवंतींद्रिय·; G2 भवासिंद्रिय· (for भवतीन्द्रिय·). V1 B0 Dn4 D6 ·संयोगाद्; Dn1 D8 D2. 3. 8 ·संत्यागाद् (for ·संन्यासाद्). —d) D4 om. V1 (hapl.) from स्व up to तद्विद्यात् (in 24d). V1 मनः (for नरः).

24 D4 om. up to तद्विद्यात् (in 24d) (cf. v. l. 23). —a) T G1-3 उपरमे (for व्युप°). —b) K6 V1 B0. 6-9 Dn1. n4 D8 D2. 3. 5-8 M6. 7 Cn (gloss: अव्युपरतमिति च्छेदः) [ऽ]व्युपरतं (B9 D5 °मं); M1. 5 [ऽ]प्युपरतं (M5 °मं) (for ऽनुपरतं). G2 मने रूपरमं यदि (sic). —c) K1 सर्वे ते (for सेवते). Da3. a4 विषये (Da3 °या·) नैव; G2 °यादेव. B0 D8 D2. 3. 6 एवं (for एव). —d) K4 B0 Dn1 D8 D2. 3. 6. 8 तं विद्यात्; Dn4 न दिष्यात् (sic); G2 विदध्यात्; वि(D6 वि)द्यात्;

C. 12. 9899
C. 12. 276(5). 25
K. 12. 281. 25

कर्मयुक्तान्प्रशंसन्ति सात्त्विकानितरांस्तथा ॥ २५
आनन्दः कर्मणां सिद्धिः प्रतिपत्तिः परा गतिः ।
सात्त्विकस्य निमित्तानि भावान्संश्रयते स्मृतिः ॥ २६
जन्तुष्वेकतमेष्वेवं भावा ये विधिमास्थिताः ।
भावयोरीप्सितं नित्यं प्रत्यक्षगमनं द्वयोः ॥ २७
इन्द्रियाणि च भावाश्च गुणाः सप्तदश स्मृताः ।
तेषामष्टादशो देही यः शरीरे स शाश्वतः ॥ २८
अथ वा सशरीरास्ते गुणाः सर्वे शरीरिणाम् ।
संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते ॥ २९
अथ वा संनिपातोऽयं शरीरं पाञ्चभौतिकम् ।
एकश्च दश चाष्टौ च गुणाः सह शरीरिणाम् ।
ऊष्मणा सह विंशो वा संघातः पाञ्चभौतिकः ॥ ३०
महान्संधारयत्येतच्छरीरं वायुना सह ।
तस्यास्य भावयुक्तस्य निमित्तं देहभेदने ॥ ३१

---

(for तद्विद्यात्). D8 स्वल्पदर्शनं.

25 D4.9 repeat 25 after 27. — a) G2 lacuna for ये भावास्. D4.9 (both second time) इंद्रियाणि च भावाश्च. — b) K1 -तामसः; K4 -तापसाः. Dn1. n4 Ds1 D2.3.6.8 तथा तामसराजसाः. — c) K7 D4.9 (last two both times) T G1-3 कर्मयुक्ताः. K7 प्रसंशंति. — d) G3 सात्त्विकीन्. D9 (marg. *sec. m.* [first time]) इतरे. K6 B6-9 Da3. a4 T G1.2 M1. 5-7 सात्त्विकाने(B9 Da4 M1.5.6 °काने)तरां(G1.2 M7 °रा)स्तथा; D4.9 (both second time) सात्त्विका निर्मलास्तथा.

26 a) K1 कर्मणा. — b) Ds1 M7 पराद्गतिः (for परा गतिः). — c) M1.5-7 सात्त्विकान्यनिमित्तानि. — d) D5-7 M1.6 भावात्; G2 गावः (for भावान्). K2 संश्रियत्ते (sic); B7.9 Da3 संश्रयति. K7 श्रुतिः; Dn1 मतिः; D5.7 यदि (for स्मृतिः). V1 भावान्याश्रयते स्मृतिः; Dn4 भावानां संश्रये स्मृतिः.

27 a) K7 D4.9 एकतमेप्येवं; V1 D6 °मेप्येव; T G1-3 °मेप्येकं. ❀ Cv: एकतमेषु, अत्यन्तभिन्नेषु जन्तुषु । ❀ — b) Da3 a4 भवा; Ds2 भावाद्. K7 D9 D4.6.9 विधिमाश्रिताः; V1 विधिना स्थिताः. T1 M7 भावं यो हि (M7 यद्धि) समास्थितं; T2 G1-3 भावं यो हि (T2 योभि-) समास्थिताः (T2 G2 °तः; G1 [before corr.] °तान्). — c) M1.5-7 भावयेद् (for °योर्). Da3 a4 इप्सितं. ❀ Cn: भावयोरिति द्वित्वं जात्यभिप्रायम्, जाग्रद्भावजातीयस्य स्वाप्नभावजातीयस्य च । ❀ — d) K7 V1 B6.7.9 Da4 Dn1. n4 Ds D2-5.8.9 T1 G1-3 प्रत्यक्षं. K2 तथा; V1 B0.8 (marg.) Dn1. n4 Ds D2.3.6.9 तयोः (for द्वयोः). ❀ Cv: द्वयोः ऐहिकपारत्रिकयोः । ❀ — After 27, D4.9 repeat 25.

28 a) Ds1 इंद्रियाणां. Dn4 [इ]व; D4 lacuna (for च). Da3. a4 lacuna for च भावा. D5.7 भावाश्च; Cv (gloss: भावना, ज्ञानम्) भावश्च. — K1 om. (hapl.) 28b-29a. — b) K7 सप्तदशः. ❀ Cv: इन्द्रियाण्येकादश, भावाः प्रयत्नचेतनाबुद्धयः, गुणाः सत्त्वरजस्तमांसीति सप्तदश ॥ Cn: पूर्वोक्तानि चतुर्दशेन्द्रियाणि, त्रयः सात्त्विकादयो भावाः, एते सप्तदश गुणा भोक्तुरष्टादशस्यानन्दे भोग्याः । ❀ — c) K7 अष्टादशा; M5.6 अष्टदशो; Dn4 देहि. — d) K7 स देहेस्य; Dn4 शरीरेषु; D[...] °रेण (for °रे स). G2 यच्छरीरे स च श्रितः.

29 K2.4 om. 29a (cf. v. l. 28). — a) G1 [...] (for स-). — b) G2 सर्वैः. B6.9 शरीरिणं; D[...] °रिणः. — K7 repeats 29cd after 30cd. — c) G[...] संश्रितां. K1 (both times) D4.5.7.9 तद्वियोगेन; D[...] तद्धि योगो हि; T1 तद्वियोगेपि (for °गे हि). — d) T[...] स नांतिके; G2 न यांति ते (for न सन्ति ते).

30 a) Da3. a4 स तथा (for अथ वा). D6 च (for वा). T2 om. from संनिपातो up to यथैवोद् (in 33c). K1.2.4.6.7 V1 D1.9 संनिवासोयं; Ds T1 G1-3 संविभागे(G2 °वे)न; M1.5-7 स(M7 सं)विभागोयं (for संनिपातोऽयं). — b) K1 Dn4 D4.9 शरीरे. K1 पंचभौतिकं; K7 Dn4 D4.9 पांचभौतिकः (Dn4 °के); G1 °भूतिकं. — c) K1.2.4 G2 M7 एकस्य; Cv एवं च. Ds2 वा (for च). — d) G3 सर्वे (for सह). Dn1 D4.9 G1 2 शरीरिणा; D2.3.8 °रिणः. — After 30cd, K7 repeats 29cd. — e) Da3. a4 Dn4 उष्मणाः; Cv (gloss: देहेन) वर्ष्मणा. K1.2 Ds2 D8 विंशोवाः; Dn4 वंशो वा; D4.9 विशो नः; T1 G1-3 विंशेव. — f) K1.2.4 संघाताः; T1 G1.3 °तं; G2 संभूतं. T1 K1 (before corr.). 2.4 पंच (K4 पांच-) भौतिकाः; G1-3 पांचभौतिकं.

31 T2 om. 31 (cf. v. l. 30). — a) K1.2 संधारयति; K7 D4.9 तु धार° (for संधार°). K6 [ए]तं; K7 D4.9 [ए]व (for [ए]तत्). T1 G1.3 महांतं धारयेतत् (G2 [...] यत ते). — c) K6 B8 Da3. a4 Dn1 [...]

यथैवोत्पद्यते किंचित्पञ्चत्वं गच्छते तथा ।
पुण्यपापविनाशान्ते पुण्यपापसमीरितम् ।
देहं विशति कालेन ततोऽयं कर्मसंभवम् ॥ ३२
हित्वा हित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः ।
कालसंचोदितः क्षेत्री विशीर्णाद्वा गृहाद्गृहम् ॥ ३३
तत्र नैवानुतप्यन्ते प्राज्ञा निश्चितनिश्चयाः ।
कृपणास्त्वनुतप्यन्ते जनाः संबन्धिमानिनः ॥ ३४
न ह्ययं कस्यचित्कश्चिन्नास्य कश्चन विद्यते ।
भवत्येको ह्ययं नित्यं शरीरे सुखदुःखभाक् ॥ ३५
नैव संजायते जन्तुर्न च जातु विपद्यते ।
याति देहमयं भुक्त्वा कदाचित्परमां गतिम् ॥ ३६
पुण्यपापमयं देहं क्षपयन्कर्मसंचयात् ।
क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ ३७
पुण्यपापक्षयार्थं च सांख्यं ज्ञानं विधीयते ।
तत्क्षये ह्यस्य पश्यन्ति ब्रह्मभावे परां गतिम् ॥ ३८

C. 12. 9913
B. 12. 276[5]. 38
K. 12. 281. 38

इति श्रीमहाभारते शान्तिपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

---

D2.3.6.8 तस्य प्रभावयुक्तस्य; K7 D4.5.7.9 तस्य प्रभावो नामैतद्; V1 Bo.6.7.9 तस्याप्यभावयुक्तस्य. — d) Da3.a4 D5.7 देहभेदेन पालने ( D5.7 °नं ).

32 T2 om. यथैवोत् (cf. v. l. 30). — a) K6 तथैव; T G1-3 यदै( T2 °दे )व ( for यथैव ). K1 (*sup. lin. sec. m.*) उत्पश्यते; Ds2 उत्पाद्यते. K1.2.4 D2 जंतुः; V1 लोके ( for किंचित् ). K7 D4.9 सोर्थवान्पात्यते कश्चित्. — b) Ds1 यदा; T1 G1-3 तदा ( for तथा ). — c) V1 om. पुण्यपापवि. K7 D4.9 पुण्यपापानि नश्यंति; Da3.a4 °पापविनाशास्ते; G2 °पापादिनाशांते. — d) K1.2.4 -समीहितं; Dn1.n4 D8 °रितः; T1 G1.3 -समन्वितः; G2 M1.5-7 -समाहितः ( for -समीरितम् ). K7 D4.9 यदा भोगेन देहिनः. — e) Ds1 विनाशति (hypermetric); D5.6 G3 विशांति; G2 विरति. — f) K6 तत्; K7 D4.9 यत् ( for ऽयं ). M1.5-7 कर्मसंभवः.

33 a) D4 om. one हित्वा. K2 भृशं प्रेत्य; Da3.a4 ह्यसंप्रैति; T1 ह्ययं प्रेत्य; G1 ह्ययं प्रैति. D4 om. from प्रैति up to तप्यन्ते (in 34a). — b) G1-3 देह- ( for देहं ). K7 D5.7.9 क्रियाश्रयः; Da4 M7 कृताशयः ( for °श्रयः ). ❀ Cn: कृताश्रयः अविद्याकामकर्मभिर्निष्पादितदेहान्तरः । ❀ — c) K2.4 काले ( for काल- ). D7 T1 G1 -संचोदितं. K2 G2 क्षेत्रं. — d) B7 विशीर्णाद्. K6 चागृहाद् ( for वा गृ° ). M7 गृणं ( for गृहम् ). G2 विशीर्याव्याकृतं गृहं. ❀ Ca: विशीर्णाद्वा, वाशब्द उपमायाम् । ❀

34 D4 om. 34a (cf. v. l. 33). — a) T1 कृते; T2 G1-3 M1.5-7 तं तु ( for तत्र ). D3 [कृ]ते न ( for नैव ). — K2.4 om. (hapl.) 34bc. — b) K1 (*sup. lin. sec. m.*).7 D9 M1 प्रज्ञा-; Da4 प्राज्ञां-. T1 G1.2 -निश्चयात्. — c) K7 G1 कृपणस्. K6 B8.9 Da3.a4 त्वनुतप्यंति; K7 °तृप्यंते; D3 संप्रतप्यंते. — d) T1 G1-3 मनः ( for जनाः ). K4.7 (marg. *sec. m.*) V1 B6-9 Da3.a4 M7 संबंधमानिनः ( Da3.a4 °तः ); B8 (marg.) Dn1.n4 Ds D2.3.6.8 °दर्शिनः.

35 a) K7 ह्येवं; D6 चायं ( for ह्ययं ). M1.5-7 किंचिन् ( for कश्चिन् ). — b) G1 कश्चिन्न ( for कश्चन ). — d) K4 D3.8 शरीर-; — e) Bo नित्यः ( for नित्यं ). Bo Dn1.n4 Ds D6 शरीरं. V1 B6-9 सुखदुःखभुक्; D2.3.6.8 °कृत् ( for °भाक् ).

36 a) B9 नैवं; M1.5-7 न वै. — b) K1.2 न स ( for नैव; K6 B8.3.9 Da3.a4 D5.7 T1 G1-3 न स ( for नैव; K6 B8.3.9 Da3.a4 D5.7 T1 G1-3 न स ( for नैव ); K4 Da4 न च ). — c) G1 यानि ( for याति ). K4 Da4 न च ). — c) G1 यानि ( for याति ). Dn4 G1 मुक्त्वा; T मुक्ता; Da3 (before corr.) Dn4 G1 मुक्त्वा; T भुक्ता; Da3 (before corr.) G2.3 हित्वा ( for भुक्त्वा ). — d) Da4 गतिः.

37 b) K1.6 क्षमयन्; K7 D4.9 क्षिप°; V1 पक्ष° (by metathesis); D6 T G1-3 क्षपयेद्. K1.2.4 पाप- ( for कर्म- ). K1 -संचयेद्; K7 Bo.6-9 Da3.a4 Dn1.n4 Ds D2-4.6-9 T G1-3 -संक्षयात्; D5.7 -संचयं. — e) G1 क्षीणदेहं. — d) Da3.a4 ब्रह्मण्यम् ( for °त्वम् ). ❀ Cv: ब्रह्मत्वं, बृहद्बृंहद्बृद्धावितिधातोः स्वयोरयसुखरूपसुखेन पूर्णत्वम् । ❀

38 a) D7 -क्षयार्थं. K6 V1 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.6.8 हि ( for च ). — b) K1 संख्यां; K2 Dn1.n4 Ds2 D2.3.5-7 T1 G3 सांख्यां; K6 Bo.6.7.9 Dn1.n4 Ds2 D2.3.5-7 T1 G3 सांख्यां; D4 साक्षं ( for सांख्यं ). Da3.a4 हिंसा-; D4 साक्षं ( for सांख्यं ). Ca सांख्य-; T G1-3 M1.5-7 हृदि ( for [illegible] ). — e) D4 न ( for [illegible] ).

२६८

C. 12. 9914
B. 12. 277(6).1
K. 12. 282.1

युधिष्ठिर उवाच ।
भ्रातरः पितरः पुत्रा ज्ञातयः सुहृदस्तथा ।
अर्थहेतोर्हताः क्रूरैरस्माभिः पापबुद्धिभिः ॥ १
येयमर्थोद्भवा तृष्णा कथमेतां पितामह ।
निवर्तयेम पापं हि तृष्णया कारिता वयम् ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं विदेहराजेन माण्डव्यायानुपृच्छते ॥ ३
सुसुखं बत जीवामि यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ॥ ४
अर्थाः खलु समृद्धा हि बाढं दुःखं विजानताम् ।
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ॥ ५
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ६

---

ह्मस्य). — [d]) K1. 2 D8 D5. 7 Cv ब्राह्मे (for ब्रह्म-). K7 D4. 9 ब्रह्मभावात्मिकां गतिं. ❀ Cv: ब्राह्मे भावे, ब्रह्मसंबन्धिविज्ञाने सति । ❀

Colophon. Ś1 G6 missing: K3. 5 B1–5 Da1. a2 Dn3. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan*: K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2–9 T G1–3 M1. 5–7 मोक्षधर्म. — *Adhy. name*: K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2–6. 8 M5. 6 नारदासितसंवादः; D7 G2 नारददेवलसंवादः; M7 नारदासितसंवादे लोकसृष्टिकथनं. — *Adhy. no.* (figures, words or both): K6 B7 Dn4 M1. 6. 7 100; Dn1 D7 T1 G1. 3 M5 102; Ds2 (marg.) 101; D8 99; T2 105; G2 96. — *Śloka no.*: Dn1 38; Dn4 Ds1 39; D8 40.

## 268

☞ This adhy. is missing in Ś1 G6 (cf. v. l. 12. 263. 52; 259. 1).

1 [a]) K6 Bo. 6–8 Da3 Dn1. n4 D8 D2. 3. 8 पौत्रा (for पुत्रा). M7 ज्ञातयः सुहृदः पुत्रा. — [b]) K7 सुहृदास्. K6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 सुताः (for तथा). M7 भ्रातरः पितरस्तथा. — [c]) G2 (also as in text) मूढैर् (for क्रूरैर्). — [d]) K6 V1 Bo. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 M1. 5. 6 -कर्मभिः (for -बुद्धिभिः).

2 [a]) K1. 2. 4 B8 सेयम्; D6 योयम् (for येयम्). G2 एवमर्थैभवत्तृष्णा. — [b]) Da1 एतं; T G1. 3 M1. 5–7 एतां; G2 एवां (for एतां). — [c]) Dn1. n4 D8 D2. 3 M7 निवर्तयेयं; D5. 7 निवर्तेयं च; D6 °र्तेतेम (for °र्तयेम). K1 पापे हि; K2 या मोहे; K6 Bo. 6. 7. 9 Da3. a4 Dn1. n4 D8 D2. 3. 5–8 पापानि (for पापं हि) — [d]) K1. 2 तृष्णाया.

3 = (var.) 12. 171. 55. — [a]) V1 अत्रेव (for अत्रापि). G3 om. from प्युदा up to पुरा (in 3[b]). — [c]) K2 -राजेंद्र (for -राजेन). — [d]) K2 मंडव्याय; K7 माड°; D7 मांडव्येन. D6 [अ]न्व- (for [अ]नु-). K7 -पृच्छति.

4 = (var.) 12. 17. 18; 171. 56. Cf. 12. 313. 50; Jātaka 539, Gāthā 125; Dhammapada 200. Uttarādhyayana Sūtra 9. 14. — [a]) K6 ससुखं; Dn4 T G1. 3 स° (for सु°). K1. 2 वत; D7 तत (for बत). G2 सुखं भवति जीवामि. — [b]) Dn4 यस्य; D7 यश्च (for यस्य). K4 किंच नः. — K3. 4 Bo om. (hapl.) 4[cd]. V1 reads 4[cd] on marg. — [d]) K1 G1 दह्यंति; T1 G3 [s]दह्यत. G1 कंचन. K7 D6 दह्यते मे न किंचन; D4 ह्यमेनं वदते किन (sic).

5 [a]) V1 दुःख- (for खलु). Da3 समृद्धादि; Dn1 °द्धो हि; D4. 5. 7. 9 विवृद्धा हि. — [b]) K1. 2 T3 G2. 3 गाढं; K4 गाहं; D5 वादे; D7 गाढ-; G2 सदा (for बाढं). — [c]) K1. 2. 4 तेपि (for स्त्वपि). — [d]) K1 Da3. a4 D5. 7 G1 अविचक्षणात्. G2 मोहयंत विचक्षणं.

6 = 12. 168. 36; 171. 51; Vāyu P. II. 31. 100. Quoted in Śaṁkara's Bhāṣya on Bṛ. Up. 4. 3. 33; in Yogasūtrabhāṣya on 2. 42. — [a]) K4 यस्य (for यच्च). K1. 2. 4. 7 B3 (marg. as in text) D4. 9 ग्राम्य-; G1 कर्म-; G3 कामं (for काम-). — [b]) B3 महा- (for महत्). — [c]) G2 -त्याग- (for -क्षय-). T2 G2 M1. 5–7 [ए]तत् (for [ए]ते). — [d]) K1. 2 V1 नार्हेतः (K1 °ताः) (for नार्हतः). K2 षोडशी°; T G1–3 M1. 5–7 कलां (T2 °लां) नार्ह( V1 T1 G1. 3 °र्हं)ति षोडशीं.

यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते ।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥ ७
किंचिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते पुनः ॥ ८
न कामाननुरुध्येत दुःखं कामेषु वै रतिः ।
प्राप्यार्थमुपयुञ्जीत धर्मे कामं विवर्जयेत् ॥ ९
विद्वान्सर्वेषु भूतेषु व्याघ्रमांसोपमो भवेत् ।
कृतकृत्यो विशुद्धात्मा सर्वं त्यजति वै सह ॥ १०
उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये ।
भयाभये च संत्यज्य संप्रशान्तो निरामयः ॥ ११
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् १२
चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयम् ।
धर्मात्मा लभते कीर्तिं प्रेत्य चेह यथासुखम् ॥ १३
राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः ।
पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः ॥ १४ C. 12. 9927 B. 12. 277(8). K. 12. 282. 14

इति श्रीमहाभारते शान्तिपर्वणि अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

---

7 With 7, cf. B. 13. 93. 45. — a) $D_6$ यच्चैव (for यथैव). $Da_3$ $Dn_4$ शृंग (for शृङ्गं). $M_{1.5.6}$ यथा शृंगं रुरोः काले. — b) $D_{5.7}$ (before corr.) $T_1$ वर्तते (for वर्धते). — $K_{2.4}$ $Bo_{6.9}$ om. (hapl.) 7cd. — c) $Da_{3.a4}$ वि($Da_3$ वृ)त्तस्य; $Dn_{1.n4}$ चित्तस्य (for वित्तेन). — d) $K_6$ वर्धमानस्य वर्धते.

8 = (var.) 12. 168. 41. — a) $G_2$ कश्चिद् (for किंचिद्). $T_1$ $G_{1.2}$ एवं (for एव). $K_1$ $Da_{3.a4}$ समत्वेन (for म°). — b) $Ds_2$ $T_2$ $G_2$ यथा (for यदा). $K_1$ कल्पितां. — c) $K_1$ $M_{1.6}$ तदैव; $T_2$ तथैव (for तदेव).

9 a) $B_8$ अकामान् (for न का°). $G_2$ अनुकृत्यैतद् (for °रुध्येत). — b) $K_{1.2}$ $B_8$ दुःखा (for दुःखं). $K_6$ कामेन; $Da_4$ कालेषु (for कामेषु). $D_6$ वैरितः (for वै रतिः). — c) $K_7$ $D_{4.5.7.9}$ [अ]र्थान् (for [अ]र्थम्). $K_{1.2}$ अनु- (for उप-). $K_2$ -युंजेत; $B_8$ (marg. as in text).9 $D_{5.7}$ -भुंजीत (for -युञ्जीत). — d) $Da_{3.a4}$ $Ds_1$ $D_2$ $T_1$ $G_{1.3}$ $M_7$ धर्मं; $T_2$ धर्म्यं (for धर्मे). $K_4$ कामाद्. $B_8$ (marg. as in text) निवर्तयेत्; $Da_4$ $Dn_{1.n4}$ $Ds_1$ $D_8$ विसर्ज° ($Dn_4$ °र्गं°); $M_6$ विवर्ध° (for विवर्जं°). $D_4$ धर्मेषु च विवर्जयेत्.

10 $K_2$ $D_{5.7}$ om. 10ab. — b) $Dn_{1.n4}$ $D_{2.3.8}$ आत्मना सोपमो भवेत्. ❀ Ca: व्याघ्रमांसोपमः, यथा व्याघ्रस्य मांसे प्राप्ते उपयोगो मांसानुध्यानवर्जनम्, एवं योग्यपदार्थेषु यत्नप्राप्तेषु उपभोगं कुर्यात्, न तेषु सततं सतृष्णः स्यात् ॥ Cp: व्याघ्रस्वीकृतं मांसमन्यः कोऽपि मम भोगसाधनं भविष्यतीति नाभिमन्यते, तद्वद्विद्वत्सु यथा कोऽपि नाभिमन्यते तथा निष्कामो भवेदित्यर्थः ॥ Cs: व्याघ्रमांसोपमः, व्याघ्रमांसं शीतलमित्यर्थः । ❀ — d) $K_1$ नैःस्पृहः; $K_6$ V $Bo_{6.8}$ (marg.).9 $Da_{3.a4}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.6.8}$ चैव ह ($K_6$ हि); $K_7$ $D_4$ वै पुनः; $B_3$ (orig.) पापकं; $D_{5.7}$ वै मुनिः; $D_9$ वै नरः; T $G_{1-3}$ $M_{1.3-7}$ वै स्वयं (for वै सह).

11 = (var.) 12. 168. 43. — a) $D_7$ त्युक्त्वा (for त्यक्त्वा). — b) $Ds_1$ प्रियाप्रियौ. — c) $K_1$ भयाश्च ये; Bo $Da_3$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ भयाभयं; $D_6$ तथा भयं; $T_1$ $G_{1-3}$ भावाभावौ (for भयाभये). $D_7$ वसत्यस्य (for च संत्यज्य). — d) $K_7$ $Ds_2$ $D_{2.4.6.8}$ स प्रशां($K_7$ °सां)तो; $D_{5.7}$ संप्रसन्नो; T $G_{1-3}$ $M_7$ भव शांतो ($G_{1.3}$ °तौ) (for संप्रशान्तो).

12 = Ādi, 840*, lines 5–6: 3. 2. 35: 12. 168. 45: B. 13. 7. 21; Harivaṁśa I. 30. 42. =(var.) Vāyu P. II. 31. 91. Bhāgavata P. 9. 19. 16; — b) $K_1$ जीर्यति. $Da_3$ जीर्यत (for °तः). $D_3$ जीर्यतो या न जीर्यति. — c) $K_{1.2}$ या (for यो). $K_3$ रोगास्; $K_2$ रागस्; $Ds_1$ भोगस् (for रोगस्).

13 $K_7$ $Ds_1$ $D_2$ om. (hapl.) 13. — a) $D_9$ $T_2$ चरित्रम् (for चा°). — b) T अनाढ्यं (for °मयम्). $G_2$ चंद्रः शुभमनाव्ययं. — c) $D_{6.7}$ कीर्तिः (for कीर्तिं). $V_1$ $B_8$ $T_2$ $G_{2.3}$ $M_{1.3}$ transp. च and इह. — d) $V_1$ $B_8$ $T_2$ $G_{2.3}$ $M_{1.3}$ transp. च and इह. $D_{4.5.7.9}$ T $G_{1-3}$ $M_7$ (*inf. lin.* as in text) तथा सुखं (for यथासुखम्).

14 Before 14, $T_2$ ins. भीष्मः. — a) $K_2$ राजंस्तु (for राज्ञस्). — c) $K_{1.2.6.7}$ $B_3$ (marg.) $D_{6.8}$ T $G_{1-3}$ $M_7$ तु (for च). — d) $K_1$ मंडव्यो. $D_{5.7}$ T $G_{1-3}$ $M_{1.3-7}$ [illegible] (for आश्रितः).

C. 12. 10614
B. 12. 285(6). 3
K. 12. 294. 3

सगर उवाच ।

किं श्रेयः परमं ब्रह्मन्कृत्वेह सुखमश्नुते ।
कथं न शोचेन्न क्षुभ्येदेतदिच्छामि वेदितुम् ॥ ३

भीष्म उवाच ।

एवमुक्तस्तदा तार्क्ष्यः सर्वशास्त्रविशारदः ।
विबुध्य संपदं चाग्र्यां सद्वाक्यमिदमब्रवीत् ॥ ४
सुखं मोक्षसुखं लोके न च लोकोऽवगच्छति ।
प्रसक्तः पुत्रपशुषु धनधान्यसमाकुलः ॥ ५
सक्तबुद्धिरशान्तात्मा न स शक्यश्चिकित्सितुम् ।
स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ॥ ६
स्नेहजानिह ते पाशान्वक्ष्यामि शृणु तान्मम ।
सकर्णकेन शिरसा शक्याश्छेत्तुं विजानता ॥ ७
संभाव्य पुत्रान्कालेन यौवनस्थान्निवेश्य च ।
समर्थाञ्जीवने ज्ञात्वा मुक्तश्चर यथासुखम् ॥ ८
भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलाम् ।
ज्ञात्वा प्रजहि काले त्वं परार्थमनुदृश्य च ॥ ९

---

(for °यिष्यामि). — $^{b}$) B7 पुरा कृतं (for पुरातनम्). — $^{c}$) ❀ Ca: तार्क्ष्यनाम्नो मुनेरपत्यं, स एवारिष्टनेमिस्तार्क्ष्यः ॥ Cs: तार्क्ष्य इति कश्यपस्य नामान्तरम् ॥ Cv: अरिष्टनेमिर्गरुडः — अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम (Ṛv. 10. 178. 1) इति श्रुतेः । ❀

3 G1 om. 3 (cf. v. l. 2). G2 om. the ref. — $^{b}$) B8 (marg.) एधते (for अश्नुते). — $^{c}$) T1 नु (for न). D4 शोचन् (for शोचेन्). K1. 2 क्षोभ्येद्; M1. 5–7 क्रुध्येद् (for क्षुभ्येद्).

4 D5. 7 अरिष्टनेमिर् (for भीष्म). — $^{a}$) D6 एतद् (for एवम्). D9 उक्ते (for उक्तस्). K7 B6. 8 Ds1 D4. 7 तार्क्षः; T1 [आ]कर्ण्य (for तार्क्ष्यः). — $^{b}$) D6 सर्वशस्त्र- (for °शास्त्र-). K6 V1 B0. 6. 8 (marg.). 9 Dn1. n4 Ds D2. 3. 8 -विदां वरः; D6 -भृतां वर (for -विशारदः). — $^{c}$) K7 D4. 9 विबुद्धि (sic); T2 °द्धः; G1 °ध्यः (for °ध्य). D4 संपदां. K1. 7 D9 चाग्र्यं; D4 वाग्र्यां; G2 चाग्रियां (hypermetric) (for चाग्र्यां). ❀ Ca: अग्र्यां, मोक्षावस्थालभ्याम् ॥ Cs: मोक्षजन्यसुखम् । ❀ — $^{d}$) K1 D4 मद्वाक्यम्; K6 Da3. a4 तद्वा°; G2 M1. 5–7 स वाक्यम् (for सद्वा°).

5 Before 5, B8 (orig.) ins. तार्क्ष उवाच; B8 (marg.). 9 T1 G1. 3 M7 अरिष्टनेमिर्; D6 तार्क्ष्य. — $^{a}$) D9 सुखे (for सुखं). — $^{b}$) K1 लोके; K4 Dn1. n4 Ds D2. 8 मूढो; D4. 5 लोका (for लोको). V1 B8 (marg. as in text) [ऽ]धिगच्छति (for ऽव°). Da4 न च लोका गमिष्यति (sic). — K1. 2. 4 D2 om. 5$^{cd}$. — $^{c}$) Dn4 प्रयुक्तः (for प्रसक्तः). K7 शत्रु- (for पुत्र-). D6 -पशुसु (for °षु). — $^{d}$) Da3 om. धन-. D4 -समाकुलाः; D5. 7 °कुलं.

6 $^{a}$) Da4 corrupt. K4 शक्त-; G1 सक्तः (for सक्त-). — $^{b}$) B7–9 om. स. K4 स शक्यैश्; B0 D5. 7 च शक्यश्; Dn1. n4 Ds D2. 3. 6. 8 Cn (Cnp as in text) शक्यं तच् (for स शक्यश्). B9 चिकित्सुं (for °त्सितुम्). — $^{c}$) K1. 7 -पाशमितो; K6 °स्थितो; Ds -पाशासितो; D8 -पाशशितो; D5. 7 -पाशान्वितो; T1 -पाशैर्हतो (for -पाशसितो). — $^{d}$) K1. 2 च (for स).

7 $^{a}$) Da4 G1 पश्यान् (for पाशान्). — $^{b}$) K1 तन्; Dn4 यान् (for तान्). K1. 2. 4 नृप; B8 (marg.) अपि (for मम). — $^{c}$) K1. 2. 4 M1. 7 (sup. lin.) नाक(M1. 7 न क)र्णकेन; T1 G3 सकंटकेन; G1 सकुंदकेन (for सकर्ण°). G2 रजसा (for शिरसा). ❀ Ca. p: सकर्णकेन, अवधानपूर्वकं शुश्रूषुणा शिरसा ॥ Cn: सावधानेन जीवता ॥ Cs: उपदेशश्रवणयुक्तश्रोत्रसहितेन शिरसा । ❀ — $^{d}$) K2. 7 B7 Ds D4. 5. 7 T G2. 3 शक्याः; K6 B6 Da3. a4 शक्यं; M1. 5–7 शक्यश् (for शक्याश्). Dn1. n4 Ds D2. 3. 6. 8 श्रोतुं; G2 जेतुं (for छेत्तुं). B8 (marg. as in text) श्रोतुं शक्यं (for शक्याश्छेत्तुं).

8 $^{a}$) D6 संप्राप्य; G2 संभाष्य (for °व्य). D5. 7 वा स्वेन; G2 काले तु (for कालेन). ❀ Cs: संभाव्य, अर्थविद्यादिना योजयित्वा । ❀ — $^{b}$) ❀ Ca. p: निवेश्य, विवाह्य ॥ Cn: दारैः संयोज्य । ❀ — $^{c}$) D4 समर्थां; T1 G1 M1. 7 °र्थं (for °र्थान्). K4 जीविने (for जीवने). — $^{d}$) B9 युक्तश्चर; G2 मुक्ता शक्तिर्.

9 $^{b}$) K4. 6 ललितां; G2 M1. 5–7 लाळितां. — $^{c}$) K1. 2 प्रजह्यात्; K7 B0 Da3. a4 D4. 9 G3 M1. 5–7 प्रजह; B8 (marg.) प्रहर (for प्रजहि). B1 Dn1. n4 Ds D2. 3. 6. 8 कालेन; M1. 5–7 काले तां (for काले त्वं). — $^{d}$) D2. 6 परात्मम् (for °र्थम्). B7. 9 Da3. a4 D5. 7 अनुसृत्य च; V1 °दृश्यत; K1 °सृत्य च (for °दृश्य च). T1 न परार्थमनुद्र च (sic); G1 परमार्थमदृश्य च. ❀ Cn: परार्थं, अन्तिमं पुरुषार्थं, मोक्षम् । ❀

10 $^{b}$) D5. 7 सक्तश्; G2 मुक्ताश्. — D5 om.

सापत्यो निरपत्यो वा मुक्तश्चर यथासुखम् ।
इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि ॥ १०
कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम् ।
उपपत्त्योपलब्धेषु लाभेषु च समो भव ॥ ११
एष तावत्समासेन तव संकीर्तितो मया ।
मोक्षार्थो विस्तरेणापि भूयो वक्ष्यामि तच्छृणु ॥ १२
मुक्ता वीतभया लोके चरन्ति सुखिनो नराः ।
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ १३
आहारसंचयाश्चैव तथा कीटपिपीलिकाः ।
असक्ताः सुखिनो लोके सक्ताश्चैव विनाशिनः ॥ १४
स्वजने न च ते चिन्ता कर्तव्या मोक्षबुद्धिना ।
इमे मया विनाभूता भविष्यन्ति कथं त्विति ॥ १५
स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्धते ।
सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति ॥ १६
भोजनाच्छादने चैव मात्रा पित्रा च संग्रहम् ।
स्वकृतेनाधिगच्छन्ति लोके नास्त्यकृतं पुरा ॥ १७
धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम् ।
लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः ॥ १८
स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा ।
को हेतुः स्वजनं पोष्टुं रक्षितुं वाद्दढात्मनः ॥ १९

C. 12. 10620
B. 12. 285(?). 19
K. 12. 294. 19

---

(hapl.) 10^c–11^b. — ^c) K1 त्वास्; D5. 7 वा (for त्वम्). — ^d) T G1. 3 यथासुखं (for °विधि).

11 D6 om. 11^{ab} (cf. v. l. 10). — ^a) K4 कृतं; M1. 5–7 गत- (for कृत-). ❀ Ca: कृतकौतूहलः, भुक्तभोगः ॥ Cn: छिन्नौत्सुक्यः । कृ हिंसायां भ्वादिस्तस्य निष्ठायां कृतमिति रूपम् ॥ Cs: कृतकौतूहलः, अकृतान्वेषणः । यथा भुक्तेषु कुतूहलाभावः कर्तुं शक्यः, नाभुक्तेषु तथा । तस्माद्भुक्तेषु भुक्त्वा कुतूहलं मुञ्च । ❀ — ^c) K1. 2. 7 D4. 9 उपपत्त्युपलब्धेषु; Cp °त्त्युपपन्नेषु. ❀ Cs: उपपत्त्योपलब्धेषु, यदृच्छया प्राप्तेषु । ❀ — ^d) B3 (marg.) लाभालाभे; Dn1 D3 D2. 8 लोकेषु च; D3 (before corr.) लोभेषु च (for ला°). K6 समा (for समो). Da1 G2 भवेत् (for भव).

12 ^b) K7 D4 संकीर्तिता. — ^c) K7 मोक्षोर्थो; Da3. a4 मोक्षार्थी. K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D3 D2. 8 M1 [अ]थ; D6 [अ]र्थं (for [अ]पि). D2 मोक्षार्थो विस्तरे वापि. — ^d) Da3 वक्षामि. B6 (marg.). 8 (marg. as in text) तं; T G1. 3 मे (for तत्).

13 ^a) K1. 2. 4 युक्ता; K7 Da3. a4 D4. 7. 9 T G1. 3 मुक्त-; G2 रक्ता (for मुक्ता). D7 T1 G1. 3 -लोभ- (for वीत-). — ^b) B8 (marg. as in text) T1 G1. 3 जनाः (for नराः). — ^c) K2 सक्तभार्या; K4 सकुमार्या (for सक्तभावा). — ^d) T2 जनास् (for नरास्).

14 ^a) T G1–3 M1. 5–7 आहारसंचये स(G1 श)क्ता. — ^b) D4. 5. 7. 9 T G2. 3 M1. 5–7 यथा (for तथा). Da1 -पिपीलिका; Dn4 °लकाः. — D2 om. 14^c–15^a. — ^d) Da2 [अ]विनाशिनः (for वि°).

15 D2 om. 15 (cf. v. l. 14). — ^a) K7 संयमे (for स्वजने). K7 D4. 5. 7. 9 बुद्धिः (for चिन्ता). — ^b) K7 कर्तव्यो (for °व्या). D5 -बुद्धिजा; G1 -बुद्ध्या (for -बुद्धिना). — ^c) D5 माया- (for मया). V1 Da1 इमे विना मया भूता. — ^d) K1. 2 V1 Bo. 7. 8 (-marg.). 9 D4 T2 G1. 2 नु (for तु).

16 ^b) D6. 7 विपद्यते (for विवर्धते). — ^c) B3 सुखं दुःखं (for सुखदुःखे). Da1 G2 [आ]मृत्यु; D5. 7 वृद्धिं. — ^d) T1 G1. 3 [अ]भि- (for [अ]धि-). G2 om. from धिगच्छति up to पित्रा (in 17^b).

17 G2 om. up to पित्रा (cf. v. l. 16). — ^b) M1. 5–7 मात्रास्वपि (for मात्रा पित्रा). V1 संगतिं; T1 G3 संग्रहः (for °हम्). — ^c) K4. 6 V1 Bo. 7. 8 Da3. a4 Da1 D3 (before corr. as in text) M7 सुकृतेन (for स्व°). T1 G1. 3 [अ]भि- (for [अ]धि-). — ^d) K1. 4. 7 D4. 9 कृतं पुरा; K2 B3 (marg.) पुरा कृतं (for [अ]कृतं पुरा). D5. 7 लोके नान्यत्कृतं पुनः; G2 लोका नास्त्यकृतं पुरा (sic).

18 ^a) M1. 7 धाव्या (for धात्रा). M1. 7 [अ]भिहित- (for विहित-). K7 Bo Dn1 D4 G2 -भक्षाणि; D5 -भक्षानि; D7 वक्षामि (sic) (for -भक्ष्याणि). — ^c) D7 M7 [ऽ]पि (for वि-).

19 ^a) ❀ Cs: मृत्पिण्डभूतस्य, मृत्पिण्डवत्स्वयम-किंचित्करस्य । ❀ — ^b) B3 (marg.) सर्वथा (for °दा). K1 Da1 D5 च (for वा). — ^d) G1 रक्षितं (for °तुं). Dn1 रक्षितं वाढमात्मनः. [अ]दृढात्मना; G2 [अ]कृतात्मनः. ❀ Cs: अदृढात्मनः, अस्थिरस्वभावस्य । ❀

C. 12. 10634
B. 12. 289[8]. 20
K. 12. 294. 20

स्वजनं हि यदा मृत्युर्हन्त्येव तत्र पश्यतः ।
कृतेऽपि यत्ने महति तत्र बोद्धव्यमात्मना ॥ २०
जीवन्तमपि चैवैनं भरणे रक्षणे तथा ।
असमाप्ते परित्यज्य पश्चादपि मरिष्यसि ॥ २१
यदा मृतश्च स्वजनं न ज्ञास्यसि कथंचन ।
सुखितं दुःखितं वापि ननु बोद्धव्यमात्मना ॥ २२
मृते वा त्वयि जीवे वा यदि भोक्ष्यति वै जनः ।
स्वकृतं ननु बुद्ध्वैवं कर्तव्यं हितमात्मनः ॥ २३
एवं विजानल्ँलोकेऽस्मिन्कः कस्येत्यभिनिश्चितः ।
मोक्षे निवेशय मनो भूयश्चाप्युपधारय ॥ २४
क्षुत्पिपासादयो भावा जिता यस्येह देहिनः ।
क्रोधो लोभस्तथा मोहः सत्त्ववान्मुक्त एव सः ॥ २५
द्यूते पाने तथा स्त्रीषु मृगयायां च यो नरः ।
न प्रमाद्यति संमोहात्सततं मुक्त एव सः ॥ २६
दिवसे दिवसे नाम रात्रौ रात्रौ सदा सदा ।
भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते ॥ २७

---

20 K1 om. (hapl.) 20. — a) K2, 4, 7 B8 (marg.) D4, 5, 7, 9 T G1, 3 च (for हि). K2, 4 Ds1 T2 G1 यथा; M1, 5–7 यतो (for यदा). K4 मृत्युं (for मृत्युर्). — b) K2 हंते च; Da3, a4 हन्येत; T1 हंत्येवम्. K3 च वि-; K7 B6 Da3, a4 D4, 5, 7, 9 G2 भुवि; V1 परि-; T1 अभि-; T2 इति; G3 [इ]ति वि- (for तत्र). G1 हंत्येवेति विचक्षणः; M1, 5–7 हरत्येवास्य पश्यतः. — d) K3 नानु-; K7 D4, 9 तत्तु; D5, 7 T G1–3 M1, 5–7 ननु (for तत्र). K3 बद्धव्यम्; Da4 G1 बोध°; D5 बोधयम्; T2 योद्धव्यम् (for बो°). Bo Dn4 D5, 7 T1 G3 आत्मनः.

21 K7 D9 om. (hapl.) 21–22. — a) K2 जीवतुम् (for °न्तम्). K4 चैनैनं (for चैवैनं). — b) K3 रक्षिणे; D2 lacuna (for रक्षणे). D4 न रणे रक्षणे नय (sic). — c) D5, 7 असमाप्तौ (for °माप्ते). — d) Dn4 D8 D4–7 G3 M1, 5, 6 मरिष्यति (for °सि).

22 K7 D9 om. 22 (cf. v. l. 21). — a) M1, 5–7 यथा (for यदा). Bo D8 D2, 5, 7, 8 G2 मृतं (for मृतश्च). D8 D2, 8 हि; T1 G1, 3 तं; T2 स्व-; M1, 5–7 सन् (for च). Da3, a4 Dn4 मृतस्य (for मृतश्च). K3 सुजनं; T2 जननं (for स्वजनं). — b) K2 ज्ञासिति; D8 D4, 5, 7 G3 M1, 5–7 ज्ञास्यति (for ज्ञास्यसि). Bo Dn1, n4 D2, 3, 6, 8 कदाचन (for कथं°). — c) Da4 T1 च (for वा). K1, 2, 4 दुःखितं सुखितं चैव (K4 वापि); D5–7 M1, 5–7 सुखिनं दुःखिनं वापि (D5, 7 चापि). — d) K3 नानु-; B8 (marg.) तत्र; Da3, a4 तेन; D4 तत्तु; G2 न तु (for ननु). Da4 Dn4 D4 बोधव्यम्. B8 T1 G1 आत्मनः.

23 a) K6 वापि (for वा). K1, 2, 4, 7 B8 (marg. as in text) D4, 5, 7, 9 यदि; Ds1 स्वपि; T1 स्वथ; G2 स्वति- (for त्वयि). K1, 2, 7 D4, 5, 7, 9 वा जीवे (by transp.); B8 (marg. as in text) [...] T1 जीवेद्वा. — b) K6 V1 Bo, 6–9 Da3, a4 Dn1, n4 D3 D2, 3, 5–8 यदा (for यदि). Dn4 भोक्षति; D3 मोक्ष्यति (for भो°). D8 D2 मनः (for जनः). — c) K6 सु- (for स्व-). G1 न तु (for ननु). K1, 2, 4 M1, 6, 7 बुद्ध्वैव; Ds1 [अ]बुद्ध्वैवं; T2 M5 बुद्ध्वैवं; G1 बोद्धैव (for बुद्ध्वैवं). — d) K4 आत्मना; M6 °नां.

24 a) K4 विजाने; D6 विज्ञात-; G1 विजानाल्लं (for °नल्ँ). — b) Da4 कश्च (for कस्य). K3 विनिश्चितः; B7, 8 (marg. as in text) Da3 D4 [अ]विं; D8 [अ]भिनिश्चयः; T G1–3 M1, 5–7 °संज्ञि(M6 °ज्ञ)तः. — c) D5, 7 संवेशय (for नि°). G2 [आ]त्मानं (for मनो). — d) G2 भूताश्च (for भूयश्च).

25 b) D5, 7 तस्य (for यस्य). — c) K1 मोहाद; K4 मोह- (for मोहः). K7 B8 लोभमोहस्तथा क्रोधः. — d) K1 सततं (for सत्त्ववान्). K6 युक्त (for मुक्त). D5, 7 च (for स-).

26 K7 D6, 9 om. (hapl.) 26. — a) G3 पाते (for पाने). — b) D4 reads from च यो up to सदा (in 27b) twice. G2 तु (for च). — c) D4 (first time) प्रमज्जति; D4 (second time) प्रसज्जति (for प्रमाद्यति). K1, 2, 4 यो (for सं-).

27 For the repetition in D4, cf. v. l. 26. — b) Da4 om. one रात्रौ. K6 V1 Bo, 6, 7, 8 (marg.) Da3, a4 Dn1, n4 D8 D2, 3, 6, 8 पुमान्; K7 B8 (orig.) D4 (both times), 5, 7, 9 T G1, 3 M1, 5–7 तथा (for the first सदा). — c) K1, 2 यत् (for यः). — d) K1, 2, 7 D4, 9 G1 मुच्यते; G2 चाप्यते (for उच्यते).

28 a) B8 (marg.) M7 आत्मभावस्य; Da3, a4 Ca, P (Cap Cpp as in text) °भावे (for °भावं). — b) K1, 2 Ds1 M1, 6, 7 मुक्त; K6 V1 Bo, 6–9 Da3, a4 D3

आत्मभावं तथा स्त्रीषु मुक्तमेव पुनः पुनः ।
यः पश्यति सदा युक्तो यथावन्मुक्त एव सः ॥ २८
संभवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः ॥ २९
प्रस्थं वाहसहस्रेषु यात्रार्थं चैव कोटिषु ।
प्रासादे मञ्चकस्थानं यः पश्यति स मुच्यते ॥ ३०
मृत्युनाभ्याहतं लोकं व्याधिभिश्चोपपीडितम् ।
अवृत्तिकर्शितं चैव यः पश्यति स मुच्यते ॥ ३१
यः पश्यति सुखी तुष्टो नपश्यंश्च विहन्यते ।
यश्चाप्यल्पेन संतुष्टो लोकेऽस्मिन्मुक्त एव सः ॥ ३२
अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति ।
न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ॥ ३३
पर्यङ्कशय्या भूमिश्च समाने यस्य देहिनः ।
शालयश्च कदन्नं च यस्य स्यान्मुक्त एव सः ॥ ३४

C. 12. 10645
B. 12. 289 [8]. 34
K. 12. 294. 34

---

T1 G1.2 Cnp (gloss : सङ्गं, भावे निष्ठा) Cp सक्तम्; Ds1 M5 सक्त; D6 युक्तम् (for मुक्तम्). B6.8.9 Da3.a4 Dn1 D5.7 G2 एवं (for एव). — c) T1 यं (for य:). D6 तदा (for सदा). Dn4 मुक्तो (for युक्तो). — d) D5.7 यथावत्सुखमेव च; T1 G1.3 मुक्त एव न संशयः.

29 K4 om. (hapl.) 29–34. D3.8 om. (hapl.) 29. Ds2 reads 29 on marg. K1 repeats 29ab after 29cd. — b) K6.7 यथा (for तथा). — c) D5.7 [ऽ]भि- (for वि-).

30 K4 om. 30 (cf. v. l. 29). — a) B6 वात्र; Dn4 वाढ- (sic); G3 भार- (for वाह-). G1 प्रस्थानं वा सहस्रेषु. ❀ Cn : वाहः, धान्यपूर्णशकटः । प्रस्थं, पुरुषाहार-परिमितं धान्यम् ॥ Cv : वाहसहस्रेषु प्रेष्यमाणेषु सत्सु पतित-तण्डुलादिना स्वस्य प्रस्थं यः पश्येत् । ❀ — b) K1 यथार्थं; K6 B6 (marg. as in text). 7. 8 (marg. as in text). 9 Da3.a4 D3.6.7 Cv वस्त्रार्थं (D3.6 °र्धं); Dn4 पात्रार्थं (for या°). V1 वापि (for चैव). ❀ Cs : अश्वादि-यानकोटिषु स्वस्य यात्रार्थं गमनमात्रप्रयोजनमेकयानं च यः पश्यति ॥ Cv : कोटिषु जीर्णपटखण्डेषु वस्त्रार्थं वस्त्रप्रयोजनं यः पश्येत् । ❀ — c) K1.2 प्रमा(K2 °सा)दे; K7 D4.9 प्रा(D4 प्र)सादान्; T1 G1 °द्- (for °दे). K6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D3.5–8 T1 मंचकं; D2 °के (for °क-). D2 G2 स्थाने (for -स्थानं). ❀ Ca : शतहस्तचतुरस्रे प्रासादे चतुर्हस्तमात्रमेव ममोपयोगि । ❀ — d) B8 (marg.) पश्यति (for मुच्यते).

31 K4 om. 31 (cf. v. l. 29). K1.2 om. (hapl.) 31. — a) D2 [अ]भ्याहितं; G1 °गतं (for °हतं). — b) B8 M1.5–7 चापि (for चोप-). — c) T1 G1.3 प्रवृत्ति-कर्षितं; D3 -कर्शितश् (for °तं). — d) K7 D4.9 पश्यति (for मुच्यते).

32 K4 om. 32 (cf. v. l. 29). — a) K6.7 B6 (orig.). 7.9 Da3.a4 D4.9 Cv सुखं; B8 (marg.) स वै; Ds2 समं; G2 M1.5–7 सुखे (for सुखी). K6 B6 (orig.). 8 (marg.). 9 मुक्तो; V1 B7 Da3.a4 युक्तो; D4 तुष्टां; T2 कष्टो (for तुष्टो). B0.8 Dn1.n4 Ds1 D2.3.6.8 यः पश्यति स (B8 स्व-; D3 सु-) संतुष्टो; D5 °ति स तुष्टो हि. — b) K7 D4.9 वा(K7 चा)पश्यंश्च; D7 ह्यपश्यंश्च; Cv नापश्यति (for नपश्यंश्च). ❀ Cn : नपश्यन् इत्येकं पदम् । ❀ — c) K1.2 D5 यथा; D7 तथा (for यश्च). D5 (marg. as in text) [अं]त्येन (for [अ]ल्पेन). Da4 संदुष्टो (for संतुष्टो). K7 D4.9 यथा-ल्पेन सुसंतुष्टो.

33 K4 om. 33 (cf. v. l. 29). G2 om. (hapl.) 33–34. — a) K2 Da4 अग्निषोमाविदं; B0 अग्नीसो°; D5.7 G3 °षोमात्मकं. D8 D2.3 (marg.) विश्वम् (for सर्वम्). ❀ Ca : यच्छरीरधारणादिकारणं तदग्निषोमावेव, क्षुधादिबोधे पुष्ट्यादिहेतुत्वात् ॥ Cn : अग्निर्जाठरो भोक्ता, सोमोऽन्नं भोज्यम् । ❀ — b) D6 ऐंद्रियं वा (for इति यश्च). D8 (marg. as in text) यश्चानुशासति; C8 यत्रानुपश्यति (for यश्चानुपश्यति). D5.7 इति वा(D7 चा)नु प्रपश्यति. ❀ Cs : अग्निशब्दो जीववचनः, नानाविधा योनीर्गच्छतीति कृत्वा । सोमशब्दः प्रकृतिवचनः, सर्वं सूयत इति कृत्वा । तथा चानुगीतासु–यत्र तद्ब्रह्म निर्द्वंद्वं यत्र सोमः सहाग्निना । व्यवायं कुरुते नित्यं धीरो भूत्वा नि[ भूतानि ]धा-रयन् ॥ (B. 14. 20. 10) इति । यत्रेति हृदयं परामृश्यते । इदं सर्वं प्राणिजातमग्निषोमाविति यः पश्यति, प्रकृतिपुरुषमयं यः पश्यति । ❀ — c) Ds1 om. च. K2 D5 G1 संस्पृ-शते. — d) T1 असुक्तैर्; G1.3 अमुक्तैर् (for अद्भुतैर्). ❀ Cp : अद्भुतैर्भावैः सुखदुःखादिभिरुत्कर्षापकर्षलक्षणैः ॥ Cs : आश्चर्यरूपपदार्थदर्शने यो न विक्रियते । ❀

34 K4 G2 om. 34 (cf. v. l. 29; 33). D5.7 om. (hapl.) 34–36. — b) K1.2.7 D4.9 T G1.3 समाना (for °ने). Dn4 पश्य (for यस्य). — c) K1 शाल-वश्; B7 शालेयाश्; T2 G1.3 शाल्यन्नं (for शालयश्).

C. 12. 10646
B. 12. 269(8). 35
K. 12. 294. 35

क्षौमं च कुशचीरं च कौशेयं वल्कलानि च ।
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ॥ ३५
पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति ।
तथा च वर्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ॥ ३६
सुखदुःखे समे यस्य लाभालाभौ जयाजयौ ।
इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ॥ ३७
रक्तमूत्रपुरीषाणां दोषाणां संचयं तथा ।
शरीरं दोषबहुलं दृष्ट्वा चेदं विमुच्यते ॥ ३८
वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च ।
कुब्जभावं च जरया यः पश्यति स मुच्यते ॥ ३९
पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा ।
बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ॥ ४०
गतानृषींस्तथा देवानसुरांश्च तथा गतान् ।
लोकादस्मात्परं लोकं यः पश्यति स मुच्यते ॥ ४१
प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः ।
ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ॥ ४२
अर्थांश्च दुर्लभाँल्लोके क्लेशांश्च सुलभांस्तथा ।
दुःखं चैव कुटुम्बार्थे यः पश्यति स मुच्यते ॥ ४३

---

35 $D_{5,7}$ om. 35 ( cf. v. l. 34 ). $D_{6}$ om. ( hapl. ) 35. —$^{a}$) $Da_{4}$ $D_{4}$ कुशवीरं; $T_{1}$ शरचीरं ( for कुश° ). —$^{b}$) $K_{1,2,4,7}$ $D_{4,9}$ $G_{2}$ कौशिकं; $Da_{3}$ कैशेयं; $D_{2}$ कौसेयं. —$^{c}$) $K_{7}$ क्षविकं. $D_{8}$ Cv ( gloss : कार्पासवस्त्रम् ) -वसनं; $G_{2}$ च समा ( for च समं ).

36 $K_{6}$ $D_{5,7}$ om. 36 ( for $D_{5,7}$, cf. v. l. 34 ). —$^{a}$) $G_{2}$ पंचभूतं ( for °भूत- ). $D_{3}$ -समायुक्तं; T $G_{1,3}$ -समुत्पन्नं ( for -समुद्भूतं ). —$^{b}$) ❀ Cp : सर्वस्य भौतिकत्वाविशेषादुत्कर्षापकर्षौ कुतस्त्याविति यः पश्यति । ❀ —$^{d}$) $D_{8}$ स्यात् ( for ऽस्मिन् ).

37 $^{b}$) $K_{7}$ $Da_{3,a4}$ लाभालाभे ( for °लाभौ ). $Da_{3,a4}$ जयाजये; $M_{1,5-7}$ प्रियाप्रियौ ( for जयाजयौ ). —$^{c}$) $G_{1,3}$ इच्छाद्वेषे. $G_{2}$ भवेद्वेगौ. —$^{d}$) $K_{1,2}$ सर्वदा; $G_{1}$ °धा ( for °था ).

38 $^{a}$) T $G_{1,3}$ छर्दि-; $G_{2}$ $M_{1,5-7}$ श्लेष्म- ( for रक्त- ). $K_{1}$ -मूल-; $K_{7}$ $Da_{4}$ $Dn_{4}$ -मुत्र- ( for -मूत्र- ). —$^{b}$) $Da_{4}$ om. दोषाणां. $K_{6}$ $Bo_{6,7,8}$ ( marg. ). $_{9}$ $Da_{3,a4}$ $Dn_{1,n4}$ $D_{2,3,8}$ संचयां( $Da_{3,a4}$ $D_{2,8}$ °या )स्; $D_{5,7}$ संशयं ( for संचयं ). ❀ Cs : दोषाणां, वातपित्तश्लेष्मणाम् । ❀ —$^{c}$) $T_{2}$ -बहुळं; $G_{2}$ -बाहुल्यं ( for -बहुलं ). —$^{d}$) $K_{6}$ $V_{1}$ $Bo_{6-9}$ $Da_{3,a4}$ $Dn_{1,n4}$ $D_{8}$ $D_{2,3,6,8}$ चैव ( for चेदं ). $D_{5}$ विमुंचते.

39 $^{a}$) $K_{1}$ कली-; $K_{4}$ $Da_{4}$ वली-; $G_{1}$ विली- ( for वली- ). $K_{1}$ -पतित-; $Da_{4}$ -पलीत-. $D_{8}$ -संसर्गं; $D_{7}$ -संयोगः; $G_{1}$ -संगांगं ( for -संयोगं ). —$^{b}$) $B_{8}$ कार्ष्यं; $D_{2,6}$ कार्यं; $G_{2}$ काय- ( for कार्श्यं ). $K_{1}$ वैकल्पम्; $K_{2}$ वैकल्यम्; $Da_{4}$ वैचर्व्यम् ( sic ); $G_{1}$ वैवर्णस- —$^{c}$) $K_{1}$ कुब्जं; $K_{2}$ दुःख-; $K_{7}$ $D_{4,9}$ कुष्ट-; $Dn_{4}$ कक्कु-; $G_{1}$ कुंज- ( for कुब्ज- ). $M_{7}$ -भावश् ( for -भावं ). $T_{1}$ जायाया ( for जरया ). $K_{6}$ $B_{9}$ $Da_{3,a4}$ कुब्जतां चे जरया ( $Da_{4}$ रजया ). —$^{d}$) $T_{1}$ $G_{1,3}$ वि- ( for स ). — After 39, $G_{1}$ reads 42 for the first time, repeating it in its proper place.

40 $D_{5,7}$ om. ( hapl. ) 40-41. $G_{1}$ om. ( hapl. ) 40. —$^{a}$) $Da_{4}$ $D_{6}$ पुंस्त्वापघातं; $G_{2}$ पुंस्त्वोपक्षातं. —$^{b}$) $Dn_{4}$ दर्शनोपरमस्. —$^{c}$) $K_{1,2}$ बाधर्यं (sic); $D_{4}$ बाधीर्यं; $Dn_{4}$ बाधिर्य- ( for °र्यं ). $K_{1,2,4}$ $B_{3}$ ( marg. as in text ) $T_{1}$ $G_{3}$ घ्राण-; $Da_{3,a4}$ प्राणि- ( for प्राण- ). —$^{d}$) $T_{1}$ $G_{3}$ यः पश्यन्स विमुच्यते.

41 $D_{5,7}$ om. 41 ( cf. v. l. 40 ). $K_{1,2,4}$ om. ( hapl. ) 41. —$^{a}$) $B_{7}$ $Da_{3,a4}$ $D_{4}$ एतान् ( for गतान् ). —$^{d}$) $G_{1}$ वि- ( for स ).

42 $T_{1}$ om. ( hapl. ) 42-43. $G_{1}$ reads 42 for the first time after 39. —$^{a}$) $T_{1}$ $G_{3}$ प्रतापैर् ( for प्रभावैर् ). $B_{3}$ ( marg. ) ते तु; $Dn_{4}$ तैश्च; $D_{5}$ lacuna ( for तैस्तैः ). —$^{b}$) $K_{1}$ पार्थिवेंद्रः ( for °वेन्द्राः ). —$^{c}$) $K_{6}$ यो गता; $G_{2}$ ये गतः. $G_{1}$ ( both times ) मुक्त्वा ( for त्यक्त्वा ). —$^{d}$) $K_{1,2}$ चेति ज्ञात्वा; $Dn_{1}$ [इ]ति तत्त्वज्ञो; $M_{1,5-7}$ तां ज्ञात्वापि ( for इति ज्ञात्वा ). $Da_{4}$ प्र- ( for वि- ).

43 $T_{1}$ om. 43 ( cf. v. l. 42 ). $D_{4,5}$ om. ( hapl. ) 43. $V_{1}$ reads 43 on marg. —$^{a}$) $D_{7}$ विविधाँस् ( for दुर्लभाँल्लॅ ). — $G_{2}$ om. ( hapl. ) $43^{b}$-$44^{a}$. —$^{b}$) $K_{1}$ $Da_{4}$ सुलभास्; $D_{7}$ विविधांस्. —$^{c}$) $Dn_{1}$ दुःखं; $M_{1,5,6}$ कुटुंबार्थे; $M_{7}$ दुःखश्. $B_{8}$ ( marg. ) कुटुंबार्थं; —$^{d}$) $G_{1}$ वि- ( for स ).

44 $G_{2}$ om. $44^{abc}$ ( cf. v. l. 43 ). —$^{a}$) $K_{2}$ दु( for च ). —$^{b}$) $K_{7}$ $D_{4,5,7,9}$ T $G_{1,3}$ $M_{1,5-7}$ जन( $G_{3}$ ...

...पलानां च वैगुण्यं जनं विगुणमेव च ।
...र्जन्मभूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ॥ ४४
...शास्त्राल्लोकाच्च यो बुद्धः सर्वं पश्यति मानवः ।
...असारमिव मानुष्यं सर्वथा मुक्त एव सः ॥ ४५

एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् ।
गार्हस्थ्ये यदि ते मोक्षे कृता बुद्धिरविक्लवा ॥ ४६
तत्तस्य वचनं श्रुत्वा सम्यक्स पृथिवीपतिः ।
मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ॥ ४७

इति श्रीमहाभारते शान्तिपर्वणि सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

# २७८

युधिष्ठिर उवाच ।
तिष्ठते मे सदा तात कौतूहलमिदं हृदि ।
तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह ॥ १
कथं देवर्षिरुशना सदा काव्यो महामतिः ।
असुराणां प्रियकरः सुराणामप्रिये रतः ॥ २
वर्धयामास तेजश्च किमर्थममितौजसाम् ।

C. 12. 10661
B. 12. 280(89). 3
K. 12. 293. 3

---

M1. 5-7 धन )वैगुण्यमेव च. — d ) B8 ( marg. as in text ) नाभिनंदति ; G3 चाभिपूजयेत् ( for नाभि° ).

45 a ) K5 शास्त्राल्ँ ; D2 शास्त्र- ( for शास्त्राल् ). Da4 D6 G2 शास्त्राल्लोकाच्च. K6 T2 बुद्धा ; D5 D8 बुद्ध्या ( for बुद्धः ). K2 शास्त्राश्च लोकात्यो बुद्धः ( sic ) ; T1 G1. 3 शास्त्राल्लोकक्षयं बुद्धा. — b ) K1 सर्वें ; K2 स वै ( for सर्वं ). M1. 5-7 मानुषः ( for मानवः ). — c ) Dn1. n4 आसारम् ; D8 M1. 5. 6 अपारम् ( for असारम् ). T G1. 3 इति ( for इव ). K1. 2. 4 इदं ह्यसारं मानुष्यं. — d ) G1 सर्वधा ( for °था ).

46 a ) G2 वशो ( for वचो ). — b ) K4 मुक्तये ( for मुक्तवत् ). D4. 9 भवांश्चर विमुक्तवत्. — c ) K1 गार्हस्थ्यं ; K2. 7 Da4 °स्थे ; Dn4 °स्थ्यो ; D4 गार्ह्य-स्था ; D3. 7 M1. 5-7 गार्हस्थ्याद् ; D9 °स्थो ( for °स्थ्ये ). G2 न तु ( for यदि ). K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 G2 वा ( for ते ). Ds1 मोक्ष- ( for मोक्षे ). — d ) Dn4 कृत्वा ; G1 कृत- ( for कृता ).

47 Before 47, B8. 8. 9 T2 ins. भीष्म उवाच. — a ) K3 ततस्तद् ; D6 तं तस्य ; M6 तत्तस्या ( for तत्तस्य ). G3 ज्ञात्वा ( for श्रुत्वा ). — b ) K6 Da3. a4 सम्यक्च ; T1 G1 स सम्यक् ( by transp. ). — c ) K1. 2. 4 मोक्षप्रदैर् ; K7 D4. 9 मोक्षदैस्तद्- ( for °जैश्च ). K1 युक्ताः. — d ) Da4 पाचयामास ( for पाल° ). K2. 7 D4. 5. 7. 9 वै ( for च ). K7 D8 प्रजा.

Colophon. Ś1 G6 missing : K3. 5 B1-5 Da1. a2 Dn2. n3 D1 G4. 5 M2-4 absent. — *Sub-parvan* : K1. 2. 4. 6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2-9 T G1-3 M1. 5-7 मोक्षधर्म. — *Adhy. name* : K1. 2. 4. 6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 5-8 स( K1 सा )गरारिष्ट( Da3 °रेरिष्ट- ; Da4 °रादिष्टे )नेमिसंवादः ; D4. 9 M5. 6 सगरारिष्टसंवादः ; G2 अरिष्टनेमिसगरसंवादः. — *Adhy. no.* ( figures, words or both ) : K6 13 ; B7 T1 G1. 3 112 ; Dn1 114 ; Dn4 M5 113 ; T2 125 ; G2 128 ; M1. 6. 7 111. — *Śloka no.* : K4 46 ; Da4 Dn1 47 ; Dn4 48.

## 278

☞ This adhy. is missing in Ś1 G6 ( cf. v. l. 12. 274. 13 ; 259. 1 ).

1 a ) K6 तिष्ठतो ( for तिष्ठते ). K2 तत्र ; T1 G1. 3 नाथ ( for तात ). — b ) K4 B9 M7 इमं ( for इदं ).

2 G1 om. ( hapl. ) 2-3. — a ) D5. 7 अथ ( for कथं ). K1. 2. 4 B7 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 G3 उशनाः. — b ) T1 [आ]कार्यो ( for काव्यो ). K1. 2. 4 D8 महामुनिः ; K7 B8 D4. 5. 7. 9 °द्युतिः ; T2 महीपते ( for महामतिः ). — c ) G3 हितकरः ( for प्रिय° ). — d ) T1 G3 स्थितः K7 D4. 9 T G3 चाप्रिये ( for अप्रिये ). ( for रतः ).

3 G1 om. 3 ( cf. v. l. 2 ). — a ) Da3. a4 तेजस्वी ( for तेजश्च ). ❀ — b ) ❀ वर्धयामास, चिच्छेद । ❀

C.12.10661
B.12.290(89).3
K.12.295.3

नित्यं वैरनिबद्धाश्च दानवाः सुरसत्तमैः ॥ ३
कथं चाप्युशना प्राप शुक्रत्वममरद्युतिः ।
ऋद्धिं च स कथं प्राप्तः सर्वमेतद्ब्रवीहि मे ॥ ४
न याति च स तेजस्वी मध्येन नभसः कथम् ।
एतदिच्छामि विज्ञातुं निखिलेन पितामह ॥ ५
भीष्म उवाच ।
शृणु राजन्नवहितः सर्वमेतद्यथातथम् ।
यथामति यथा चैतच्छ्रुतपूर्वं मयानघ ॥ ६

एष भार्गवदायादो मुनिः सत्यो दृढव्रतः ।
असुराणां प्रियकरो निमित्ते करुणात्मके ॥ ७
इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपः स च ।
प्रभविष्णुश्च कोशस्य जगतश्च तथा प्रभुः ॥ ८
तस्यात्मानमथाविश्य योगसिद्धो महामुनिः ।
रुद्ध्वा धनपतिं देवं योगेन हृतवान्वसु ॥ ९
हृते धने ततः शर्म न लेभे धनदस्तथा ।
आपन्नमन्युः संविग्नः सोऽभ्यगात्सुरसत्तमम् ॥ १०

---

G2 lacuna for किमर्थम. K1.2 अतितेजसां; K4 इति तेजसं; K6 B6.7.9 Da3.a4 T1 G2.3 M1.5–7 अमित-द्युतिः (B6 Da4 °ति); D6 T2 °तौजसं (for °तौज-साम्). — c) K1.2 G3 नित्य- (for नित्यं). K1 -वैर-निरुद्धाश्च; Da4 वैरनिवृद्धाश्च; T1 G3 वैरानुबद्धा(T1 °बंधा)श्च (for वैरनि°).

4 a) D4 अथ (for कथं). Dn4 D4 वापि; G2 अपि (for चापि). K1 उशनः; K7 उशन; B8 Dn4 D8 D3.6.7 G1.3 उशनाः (for उशना). K6 T G1.3 प्राप्तः; Da3.a4 पापः; D4 प्रवि (sic); D5.7 प्राप्य (for प्राप). — b) T2 शक्रत्वम्. K6 B9 Da3.a4 M1.5–7 अमि(Da4 °सि)त- (for अमर-). — c) G1 M1 ऋषिं (for ऋद्धिं). K6 B8 (marg. as in text) सकलां (K6 °लं) (for स कथं). D5.7 T2 G1.3 प्राप; T1 प्राह (for प्राप्तः). — d) K1.2.4.7 D4.5.7.9 वदस्व (for ब्रवीहि).

5 a) K1.2 V1 D5.7 T1 स च (by transp.). K6 न यातवसतेजस्वी (sic); K7 न याचितसते° (sic). ❀ Cs: न याति चेति । सायं प्रातश्च नभसोन्तर्भागयोर्दृश्यते न कदाचिदपि मध्ये । तच्च कस्मादित्यर्थः । ❀ — b) V1 D5.7.9 (marg.) मध्ये च (for मध्येन). G2 तुनसं (sic) (for नभसः). ❀ Ca: नभोऽत्र मूर्धाकाशं ब्रह्मरन्ध्रम् । ❀ — c) K2 विज्ञात्वं (for विज्ञातुं). — d) K1 D2 G1 पितामहः.

6 V1 पितामह (for भीष्म). — a) M1.5–7 स्वव-हितः (for अव°). — b) D8 एव (for एतद्). K1.2.4 यथा तथा (for यथातथम्). — c) Da4 कथामति- (sic) (for यथामति). B8 D6 तथा (for यथा). K7 D9 T2 चैव; D4 वेव (for चैतत्). — d) B8 T2 G1 श्रुतं (for श्रुत-). Dn4 यथा (for मया).

7 b) Bo.8 (marg. as in text) Da3 Dn1.n4 D8 D2.3.6.8 मान्यो (for सत्यो). — c) K4.6 Bo.6.1.1 Da3.a4 Dn1.n4 D8 D2.3.6.8 सुराणां वि- (for असु-राणां). — d) K1 नडणात्मके (sic); K6 V1 Bo.1 (orig.).7.8 (marg. as in text).9 Da3.a4 Dn1.n4 D8 D2.3.6.8 G2 Cn.Cpp (gloss: ईश्वरेच्छा कारणं तदात्मके) Cs (gloss: प्रयोजनविशेषे) का(Da3 क)रणात्मके; B8 (marg.) कुरुणा°; T G1.3 M1.5–7 कारणांतरे; Cp (gloss: आराधनवशात्) करणात्मिके (for करुणात्मके). ❀ Cn: कारणात्मके, कारणा क्रिया तदात्मके । ❀

8 a) K7 D4.9 वरुणो; B8 (marg. as in text) वरदो (for धनदो). T G1.3 राज्ञां (for राजा). ❀ Cs: इन्द्र इति धनदविशेषणम्, पारमैश्वर्ययोगात् । ❀ — b) Da3 om. रक्षो. K7 -रक्षाधिपः (for -रक्षो°). K1.2 तथा; K4.6 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.6.8 T1 सदा; V1 प्रभुः; D5.7 शुचिः (for स च). — c) K1.2.4 लोकस्य; K6 Bo.6–8 Da3.a4 Dn4 D81 D2.3.5.6.8 कोषस्य; G1 कोशश्च (for कोशस्य). — d) K7 G2 यथा प्रभुः; T G1.3 M1.5–7 प्रभुस्तथा (by transp.).

9 a) T2 corrupt. K1.2.4 Da3.a4 तथा (for तस्य). K7 [आ]विश्यं. — b) K1 (by corr. as in text) योगसिद्धिमहामुनेः. — c) K1.7 D4.9 (by corr. as in text) रुद्धा; B9 वद्धा; D81 बुध्वा (sic); — d) K1 G2 क्रुद्धं (for रुद्ध्वा). K1 D4 धनपति-. K7 B8 D4.9 T1 [आ]ह्यतवान् (sic); K6 कृतवान्; हृत°. B8 M1.6 वसुः.

10 a) K7 D4 हृत-; Da4 रुतें (for हृते). K1.4 तदा; K2 तथा (for ततः). — b) K2 ततः; K1.4 V1 Bo.6.9 D8 D3 (by corr. sec. m. as in text).5.6 G1.2 तदा; D1 सदा (for तथा). — c) K7 D4 -मृत्युः (for -मन्युः). G2 संविघ्नः. — d) K1 D8 सोऽभ्यगात्; T2 G1.3 सोन्व° (for सोऽभ्य°). K1.2 सुखसत्तमम्;

निवेदयामास तदा शिवायामिततेजसे ।
देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ॥ ११
कुबेर उवाच ।
योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु ।
योगेनात्मगतिं कृत्वा निःसृतश्च महातपाः ॥ १२
भीष्म उवाच ।
एतच्छ्रुत्वा ततः क्रुद्धो महायोगी महेश्वरः ।
संरक्तनयनो राजञ्शूलमादाय तस्थिवान् ॥ १३
क्वासौ क्वासाविति प्राह गृहीत्वा परमायुधम् ।
उशना दूरतस्तस्य बभौ ज्ञात्वा चिकीर्षितम् ॥ १४
स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः ।
गतिमागमनं वेत्ति स्थानं वेत्ति ततः प्रभुः ॥ १५
संचिन्त्योग्रेण तपसा महात्मानं महेश्वरम् ।
उशना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत ॥ १६
विज्ञातरूपः स तदा तपःसिद्धेन धन्विना ।
ज्ञात्वा शूलं च देवेशः पाणिना समनामयत् ॥ १७
आनतेनाथ शूलेन पाणिनामिततेजसा ।
पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः ॥ १८
पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः ।
आस्यं विवृत्य ककुदी पाणिं संप्राक्षिपच्छनैः ॥ १९

C. 12. 10677
B. 12. 290(89). 19
K. 12. 293. 19

K4 Da3 सुरसत्तम ; D6 पुरसत्तमं ( for सुर° ). D4 सोभ्यगाहसुरसत्तं ( corrupt ).

11 $^a$) K7 B8 ( marg. ). 9 D4. 5. 7. 9 T G1–3 M1. 5–7 ततः; Dn4 तथा ( for तदा ). — $^b$) Dn4 -तेजसा ( for तेजसे ). — $^d$) K1. 2 सोम्याय. Da3 ( by corr. as in text ) बल- ( for बहु- ).

12 K1. 2. 4. 6. 7 V1 B0. 7. 8 Da3. a4 Dn1. n4 D8 D1–7. 9 G1. 2 M1. 5–7 om. the ref. — $^a$) K1 योगात्मको न; D4 यागात्मकेन ( for योगा° ). — $^b$) K4. 7 Da4 रुद्वा ( for रुद्ध्वा ). K7 Da3 कृतं ( for हृतं ). — $^c$) K2 योगे नाम ( for योगेनात्म- ). K6 B0. 6. 7. 8 ( marg. as in text ) Da3. a4 Dn1. n4 D8. 5–8 M1. 6. 7 गतं; G2 M6 -कृतं ( for -गतिं ). ❀ Cs : आत्मगतिं, निःसरणमार्गं रोमकूपादिकम् । ❀ — $^d$) Da3. a4 निर्गतश्च ( for निःसृतश्च ). B8 ( marg. ) सु- ( for च ).

13 MSS. om. the ref. — $^a$) G2 reads from ततः क्रुद्धो up to बभौ ज्ञात्वा ( in 14$^b$ ) twice. B8 वचः ( for ततः ). D6 शुद्धो ( for क्रुद्धो ). — $^b$) K1. 4 मया (sic) ( for महा- ). — $^c$) M1 -नयने ( for -नयनो ). G2 ( both times ) M1. 5–7 रोषात्; G3 ( by corr. as in text ) राजा ( for राजन् ).

14 For the repetition in G2, cf. v. l. 13. — $^a$) G2 ( both times ) [ अ ]याद् ( for [ अ ]सात्र् ). — $^b$) K8 B8 ( by corr. ) Da3. a4 वरमायुधं; B6 ( before corr. ) वरमांबरं ( for परमायुधम् ). — $^c$) K1. 2. 7 D4. 9 T1 G2 ( both times ) दूरगस्. — $^d$) K1. 2 ततो; K7 D4. 9 गतो; T G1. 3 M1. 5–7 ब्रभूज ( for बभौ ). K1 चिकीर्षितं. ❀ Cn : बभौ, आत्मानं दर्शितवान् । ❀

15 $^a$) K6 -योगिनं ( for -योगिनो ). K1 बुद्ध्वा; D7 ज्ञात्वा ( for बुद्ध्वा ). — $^b$) D5. 7 रोषं चैव ( for तं रोषं वै ). — $^c$) D9 ( marg. as in text ) मतिम् ( for गतिम् ). K1. 2 D8 D4. 5. 7. 9 चेति ( for वेत्ति ). — $^d$) K1. 2. 4 D4. 5. 7. 9 T G1–3 चेति; Dn1. n4 D8 चैव ( for वेत्ति ).

16 M1. 5–7 om. 16–17. — $^a$) K1. 2 Dn4 संचित्य; D4 संवित्य ( for संचिन्त्य ). K6 B6. 8 ( marg. ). 9 Da3. a4 D5. 7 मनसा ( for तपसा ). — $^c$) K7 D4. 9 -युक्तात्मा ( for -सिद्धात्मा ).

17 M1. 5–7 om. 17 ( cf. v. l. 16 ). — $^a$) B7 D8 D3. 5. 7 T1 G1. 3 विज्ञान- ( for विज्ञात- ). — $^b$) K7 B0. 8 ( marg. as in text ). 9 Dn1. n4 D8 D2. 3. 6. 8 -सिद्धोथ ( for -सिद्धेन ). K1. 2. 4 V1 हेतुना; T G1. 3 चक्षुषा ( for धन्विना ). — $^c$) K1 देवेश-; Da3. a4 देवेन; G2 देवेशं ( for देवेशः ). — $^d$) K7 B8 ( marg. ) सममानयत्; Da3 समनानयत्.

18 $^a$) D6 आगतेन ( for आन° ). — $^b$) V1 B6. 7. 9 Da3. a4 पाणिनाना( Da3. a4 °न )मितेन च; T G1. 3 °मापामितौजसः (sic). ❀ Cv : अमिततेजसा पाणिना इति तृतीया सप्तम्यर्थे । ❀ — $^d$) T1 G1 उग्रायुधं; M1. 5 उद्रायुधः; M6. 7 उग्रायुध- ( for °युधः ). — After 18, T G3 ins. :

740* स तु प्रविष्ट उशना पाणिं माहेश्वरं प्रभुः ।

[ T1 ततः ( for स तु ). ]

19 G1 om. ( hapl. ) 19$^a$–20$^b$. — $^a$) Ds1 प्राणि- ( for पाणि- ). D5. 7 पाणिमध्यगतं दृष्ट्वा. — $^c$) Da4

C. 12. 10678
B. 12. 290(89). 20
K. 12. 295. 20

स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः ।
व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः ॥ २०

युधिष्ठिर उवाच ।

किमर्थं व्यचरद्राजन्नुशना तस्य धीमतः ।
जठरे देवदेवस्य किं चाकार्षीन्महाद्युतिः ॥ २१

भीष्म उवाच ।

पुरा सोऽन्तर्जलगतः स्थाणुभूतो महाव्रतः ।
वर्षाणामभवद्राजन्प्रयुतान्यर्बुदानि च ॥ २२
उदतिष्ठत्तपस्तप्त्वा दुश्चरं स महाह्रदात् ।
ततो देवातिदेवस्तं ब्रह्मा समुपसर्पत ॥ २३
तपोवृद्धिमपृच्छच्च कुशलं चैनमव्ययम् ।
तपः सुचीर्णमिति च प्रोवाच वृषभध्वजः ॥ २४
तत्संयोगेन वृद्धिं चाप्यपश्यत्स तु शंकरः ।
महामतिरचिन्त्यात्मा सत्यधर्मरतः सदा ॥ २५
स तेनाढ्यो महायोगी तपसा च धनेन च ।
व्यराजत महाराज त्रिषु लोकेषु वीर्यवान् ॥ २६
ततः पिनाकी योगात्मा ध्यानयोगं समाविशत् ।
उशना तु समुद्विग्नो निलिल्ये जठरे ततः ॥ २७

---

अस्यं; T G3 आस्ये (for आस्यं). V1 ककुदि; T1 G3 M5 भ्रुकुटी; T2 भ्रुकुटिं; M6 कुकटी; Csp (gloss : सृक्कणी) कृकरी (for ककुदी). G2 आस्ये विवृत्याशुकटिं; M1. 7 आस्ये विवृत्याकु(M7 °कृ)कटी. ❀ Ca : ककुदी, ककुदाख्यग्रीवानिकटपृष्ठवंशोन्नतप्रदेशरूपलक्षणवान् ॥ Cn : देवानां पट्टाधिपतिः । ❀ —d) K6 स (for सं·). K4 V1 Bo. 6. 7. 8 (marg. as in text). 9 Dn1. n4 Ds D2. 3. 5–8 पाणिना (V1 °भ्यां) प्रा(D7 प्र)क्षिपच्छनैः.

20 G1 om. 20ab (cf. v. l. 19). —a) D5. 7 प्रविश्य (for प्रविष्ट). K1. 2 Da3. a4 D3. 7 G3 उशनाः. —b) T1 om. प्रभुः. —c) K1. 2. 4 व्यचरश्चापि (for °च्चापि). — After 20, B6. 8 ins. an addl. colophon [ *Sub-parvan* : B6. 8 मोक्षधर्मः. — *Adhy. name* : B8 भवभार्गवसमागमः ].

21 a) K2 विचरद्; Ds अच(Ds1 °व)रद् (for व्यच°). —b) K1. 2 Ds1 D2. 4. 7 उशनास् (for उशना). —d) K7 V1 D4. 5. 7 M1. 5. 6 वा (for च). B8 (marg.) T1 G1 महामतिः; D2 °कृतिः; D5. 7 °त्मनः (for °द्युतिः).

22 T1 om. the ref. —a) T1 G1. 8 च (for सो). G1 ·गतजलः (for ·जलगतः). —c) K1. 2 अयुतं (for अभवद्). —d) K1 अन्वधानि (sic) (for अर्बुदानि).

23 b) K7 B7 दुस्तरं; V1 D5. 7 दुष्करं; M7 दुश्चरद् (for दुश्चरं). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 G2 M5–7 च; B8 (marg.) तु (for स). Da4 G2 महाह्रदान्; T2 °तपाः (for °ह्रदात्). —c) K7 Ds D6. 9 देवाधि·; D7 T G1–3 M1. 5–7 देवादि· (for देवाति·). K1. 2. 7 D4. 9 ·देवं (for ·देवस्). G2 तु (for तं). —d) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2–9 ब्रह्मा वै समसर्पत (D5 °सर्प्यत; D7 °तर्पत); Ds T G1. 3 ब्रह्मा चैनं समर्चत (D3 °र्चयत्); G2 तद्ब्रह्मा स्समुसर्पत; M1 ब्रह्माणमुपसर्पत.

24 a) K2 D6 G3 ततो (for तपो·). K1. 2 G1 वृद्धम् (for ·वृद्धिम्). K1. 2. 4 अपृच्छ(K1 °च्छं)श्च; D5. 7 °च्छत्तं; G2 °च्छत्स (for °च्छच्च). —b) Da1 शलभं (for कुशलं). K1 चैतम्; K6 चैव; V1 Dn1. n4 D2. 3. 5. 7. 9 (by corr. as in text) चैवम्; D4 वैवम् (for चैनम्). K6 नव्ययः; K7 Bo. 6. 7 (marg. as in text). 9 Da3. a4 Ds D2–9 अव्ययः (for अव्ययम्). —c) Da1 Dn1 ततः (for तपः). K7 B6 (marg.). 7–9 Da3. a4 M1. संचीर्णम् (for सुची°). M5 एवेति (for इति च). M1. V1 Bo. 7 Ds 6. 7 स तपः सुचीर्णमिति. —d) K1. 2. 4 T2 M1. 5–7 वृषभध्वजं; D4. 6 °ध्वज.

25 a) K6 G2 तं (for तत्-). K6 B3 (marg. as in text) Da3. a4 G2 M1. 5–7 बुद्धिं; K7 वृद्धं; Ca (gloss : अणिमादिप्राप्तिं) वृद्धिं (as in text). K6. 7 D4 वा (for च). —b) K1. 2. 4 V1 B3 D4. 9 T G1. 3 [अ]प्यपश्यत स शंकरः (B8 [marg.] महेश्वरः). —c) D7 Da4 अतिचात्मा (sic) (for अचिन्त्यात्मा). G1 तथा T1 G3 ·रतिः; M1. 5–7 ·तपाः (for ·रतः). (for सदा).

26 a) K6. 7 Da3. a4 Dn4 Ds1 D4. 6. 8. 9 तेनाढ्यो (Dn4 D4 °ढ्या); T G1. 3 °नाभाढ्य (for तेनाढ्यो). —b) K1. 7 V1 D9 च दमेन; K2 चरसेन (for च धनेन). —c) K7 (also as in text) महाभाग (for °राज).

27 b) K1 Dn4 D5. 7 ·योग· (for ·योगं). B7 G1 समाविशत्; D5. 7 ·समाधिना (for समाविशत्). —c)

उदरे च महायोगी देवं तत्रस्थ एव च ।
निःसारं काङ्क्षमाणस्तु तेजसा प्रत्यहन्यत ॥ २८
उशना तु तदोवाच जठरस्थो महामुनिः ।
प्रसादं मे कुरुष्वेति पुनः पुनररिंदम ॥ २९
तमुवाच महादेवो गच्छ शिश्नेन मोक्षणम् ।
इति स्रोतांसि सर्वाणि रुद्ध्वा त्रिदशपुंगवः ॥ ३०
अपश्यमानः स द्वारं सर्वतःपिहितो मुनिः ।
पर्यक्रामद्दह्यमान इतश्चेतश्च तेजसा ॥ ३१
स विनिष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् ।
कार्येण तेन नभसो नागच्छत च मध्यतः ॥ ३२
निष्क्रान्तमथ तं दृष्ट्वा ज्वलन्तमिव तेजसा ।
भवो रोषसमाविष्टः शूलोद्यतकरः स्थितः ॥ ३३
न्यवारयत तं देवी क्रुद्धं पशुपतिं पतिम् ।
पुत्रत्वमगमद्देव्या वारिते शंकरे च सः ॥ ३४

देव्युवाच ।

हिंसनीयस्त्वया नैष मम पुत्रत्वमागतः ।

C. 12. 10693
B. 12. 290[89]. 35
K. 12. 295. 36

---

K1.2 Da3. a4 उशनास् (for उशना). K6 च; D4 तु (for तु). — d) K4 Da3 Dn1. n4 Ds1 D6 विलिल्ये; D3 G2 M7 नि( M7 न )लिप्ये ( for निलिल्ये ). K1. 2 जठरे तथा; K7 D4. 9 °रांतरे; V1 °रे रतः; B6 (marg.) °रे पुनः (for °रे ततः).

28 a) K7 D4. 9 तदा (for महा-). — b) T1 G1. 3 रुद्रं (for देवं). T1 G1. 3 कुक्षिस्थ (for तत्र°). K7 D4. 5. 7. 9 सः; B8 हि; G2 ह (for च). — c) K7 D4. 9 निःकाशं; Ds1 निसारं; T G1. 3 निःसरं (for निःसारं). K1. 4 कांक्ष्यमाण( K1 °न )स्; K7 कांक्षमानस् (for °माणस्). K6 B6. 8 च; B0. 7 Dn1. n4 Ds D2. 3. 6. 8 स (for तु). B9 निःसारं कांक्ष्यमाणस्य; Da3. a4 °रणं कांक्षमाणस्. ❀ Ca. p: निःसारं, ऊर्ध्वमार्गेण निःसरणम् । ❀ — d) B6-9 Da3. a4 तेनासौ (for तेजसा). B0 Dn1. n4 Ds D2. 3. 6. 8 M6 तेन स प्रतिहन्यते.

29 a) K1. 2. 4 उशनास्. K6 B6. 8 (marg.) Da3. a4 Dn4 तं; K7 B9 T G1. 3 च; D9 [अ]थ (for तु). K3 Da3. a4 T1 G1. 3 M1. 5-7 तत; B0 Dn1. n4 Ds D2. 3. 5. 6. 8 तथा (for तदा). G2 M1. 5-7 प्राह (for उवाच). — d) D4. 9 G2 अरिंदमः.

30 a) D7 T1 G1. 3 महातेजा (for °देवो). — b) G1 गच्छन् (for गच्छ). D5. 7 छिद्रेण (for शिश्नेन). — c) K6. 7 D4. 9 श्रोतांसि (for स्रोतांसि). B0. 7 Dn1. n4 Ds D2. 3. 6. 8 सर्वाणि स्रो( B0 Dn4 Ds1 D6 श्रो )तांसि (by transp.). — d) K2 दृष्ट्वा; K6. 7 रुद्धा (for रुद्ध्वा).

31 a) D4. 9 अपश्यन्नथ; D5 °श्यमानं (for °श्यमानः). K6. 7 V1 B0. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 तद् (for स). — b) K7 D4. 5. 7. 9 -पिहितं; M1. 7 -[s]पिहितं; M5. 6 त्रिहितं ( for -पिहितो ). — c) K1. 2. 4 अपाक्रामद्; Da4 पर्या°; D5. 7 पर्यक्रमद्; M1 परिक्रामद् (for पर्य°). D7 वाह्यमान (for दह्य°). — d) K1. 2. 4 भारत; Ds2 चेतसा (for तेजसा).

32 a) B0 Dn1. n4 Ds D2. 3. 6. 8 वै; T1 तु (for वि-). — b) K7 प्रति-; B0 इति; D7 अपि; T1 उप- (for अभि-). K7 D4 -पादिवान् (for -पेदि°). — c) G2 न हि सा (sic) (for नभसो). ❀ Cs: कार्येण तेन, धनेश्वरधनापहारेण महेश्वरकोपेनाधःस्रोतोनिःसरणेनेत्यर्थः । ❀ — d) V1 D5. 7 G2 M1. 5-7 न गच्छति (for नागच्छत). K6 V1 B0. 7-9 Dn1. n4 Ds D2. 3. 6 स (for च). K6 G2 मध्यमः (for मध्यतः). D8 T G1. 3 Cn नाध्यगच्छत मध्यतः. — After 32, T2 ins.:

741* तत एव च देवेषु सम्प्रतिष्ठो महामुनिः ।
पौरोहित्यं च दैत्यानां चक्रे तेजोविवृद्धये ।

33 a) K7 D4. 9 इव (for अथ). K6 V1 B0. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 विनिष्क्रांतं तु (K6 B3 Da3. a4 च) तं दृष्ट्वा. — b) K6 ज्वलंत (for °तम्). D5. 7 अथ (for इव). — c) G2 रोषः (for रोष-). — d) Ds1 स्मृतः (for स्थितः).

34 Ds2 reads 34ab on marg. (sec. m.). — a) K1 निवारयत; K4 व्यापारयत; B0. 8 (marg.) D8 K8 D2. 3. 6 अवारयत; Dn4 आवा° (for न्यवा°). Ds lacuna; G2 न्यवारयत्ततो देवी. — b) Da4 तया; D5 आगमद्. — d) D7 पतिः (for पतिम्). — c) D5 स्रुति; T1 G1. 3 स च; M1. 5-7 तु सः (for च सः).

35 Da3. a4 om. the ref. — a) K1 D4 हिंस( D4 °म )नीयस्; Da4 सिंहनीयस्; G1 हिंसनीयास् (for °नीयस्). Da4 त्वनैषध्य; Dn1. n4 Ds D2. 3. 6. 8 त्वया नैव (for त्वया नैष). — b) Ds1 आगतिः; D4 आगताः. — c) T1 G8 किंचिन् (for कश्चिन्). — d) The portion from छंति up to विद्वांश्चाशीलो (in 12. 279. 24c)

C.12.10193 B.12.290(29).35 K.12.295.36

न हि देवोदरात्कश्चिन्निःसृतो नाशमर्छति ॥ ३५

भीष्म उवाच ।

ततः प्रीतोऽभवद्देव्याः प्रहसंश्चेदमब्रवीत् ।
गच्छत्वेष यथाकाममिति राजन्पुनः पुनः ॥ ३६

ततः प्रणम्य वरदं देवं देवीमुमां तथा ।
उशना प्राप तद्धीमान्गतिमिष्टां महामुनिः ॥ ३७
एतत्ते कथितं तात भार्गवस्य महात्मनः ।
चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ॥ ३८

इति श्रीमहाभारते शान्तिपर्वणि अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

# २७९

युधिष्ठिर उवाच ।

अतः परं महाबाहो यच्छ्रेयस्तद्वदस्व मे ।
न तृप्याम्यमृतस्येव वचसस्ते पितामह ॥ १
किं कर्म पुरुषः कृत्वा शुभं पुरुषसत्तम ।
श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद ॥ २

भीष्म उवाच ।

अत्र ते वर्तयिष्यामि यथा पूर्वं महायशाः ।
पराशरं महात्मानं पप्रच्छ जनको नृपः ॥ ३

---

is lost in D5 on missing fol. K1 उहति (sic); K2.4.7 B8.9 D4.6.7.9 T G1-3 M1.5-7 अर्हति; Da3 D5 D8 ऋच्छति; Da4 अछति (sic); D2 ऋर्छति (for अर्छति).

36 D5 missing (cf. v. l. 35). MSS. om. the ref. — a) K1 भवेद्; K4.6 V1 B0.6-9 Da4 Dn1.n4 D3.6.8 T2 भवो; G2 महा (for ऽभवद्). K4 Da3 D2.7.8 T2 M1.5-7 देव्या; K6 देव्यां (for देव्याः). K7 D4.9 देव्याः प्रीतस्ततो देवः. — c) K1 Da4 गच्छेत्वेष (for गच्छ°).

37 D5 missing (cf. v. l. 35). — b) B8 देवं (marg. °वी) रुद्रम्; T1 G1 देवदेवम् (for देवं देवीम्). D4 उमा (for उमां). V1 D6 T1 G1.3 तदा (for तथा). — c) K1.2.4 D3 D7 G1.3 उशनाः. T1 G3 तां (for तद्). — d) D7 महामतिः.

38 D5 missing (cf. v. l. 35). — a) K4 तत्र (for तात). — d) Da3 M1.5-7 मा (for मां). K7 D9 परिपृष्ठवान् (for °पृच्छसि).

Colophon. Ś1 D5 G6 missing: K3.5 B1-5 Da1.a2 Dn2.n3 D1 G4.5 M2-4 absent. — *Sub-parvan*: K1.2.4.6.7 V1 B0.6-9 Da3.a4 Dn1.n4 D3 D2-4.6-9 T G1-3 M1.5-7 मोक्षधर्म. — *Adhy. name*: K1.2.4 शुक्रोत्पत्तिः; K6 V1 B6-9 Da3 D3 M5.6 भवभार्गवसंवादः; K7 D4.7.9 काव्योपाख्यानं; B0 Dn1.n4 D2.3.6.8 भवभार्गवसमागमः (D6 adds समाप्तः); Da4 भार्गवसंवादः; G2 भार्गवचरितं. — *Adhy. no.* (figures, words or both): K6 14; B7 T1 G1.3 113; Dn1 115; Dn4 Ds2 (marg. *sec. m.*) M5 114; D3 109; T2 126; G2 129; M1.6.7 112. — *Śloka no.*: Da3 Dn1.n4 D8 38.

## 279

☞ This adhy. is missing in Ś1 G6 (cf. 12. 274. 13; 259. 1).

1 D5 is missing up to विद्वांश्चाशीलो (in 12. 279. 24c) (cf. v. l. 12. 278. 35). — a) K6 ततः (for अतः). — b) K6 V1 B0.6.7.9 Da3.a4 Dn1.n4 D2.3.6.8 G2 ब्रवीहि (for वदस्व). M1.5-7 नः (for मे). — c) K1 तृष्यामि (for तृप्यामि). G1 अत्र तस्यैव (for अमृतस्येव). M1.5-7 [इ]ह (for [इ]व).

2 D5 missing (cf. v. l. 1). — a) K6 किंकर्म (for किं कर्म). K7 पुरुषं. — b) D6 कर्म च (for पुरुष-). — c) G2 शुभं (for श्रेयः). — d) D4 M1 वेह (for चेह).

3 D5 missing (cf. v. l. 1). G3 om. the ref. — a) K1.4 Dn4 (marg.) वर्णयिष्यामि. G3 अत्रैव

किं श्रेयः सर्वभूतानामस्मिँल्लोके परत्र च ।
यद्भवेत्प्रतिपत्तव्यं तद्भवान्प्रब्रवीतु मे ॥ ४
ततः स तपसा युक्तः सर्वधर्मविधानवित् ।
नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ॥ ५
धर्म एव कृतः श्रेयानिहलोके परत्र च ।
तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिणः ॥ ६
प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते ।
धर्मात्मकः कर्मविधिर्देहिनां नृपसत्तम ।
तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ॥ ७
चतुर्विधा हि लोकस्य यात्रा तात विधीयते ।
मर्त्या यत्रावतिष्ठन्ते सा च कामात्प्रवर्तते ॥ ८
सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः ।
दशार्धप्रविभक्तानां भूतानां बहुधा गतिः ॥ ९
सौवर्णं राजतं वापि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ॥ १०
नाबीजाज्जायते किंचिन्नाकृत्वा सुखमेधते ।
सुकृती विन्दति सुखं प्राप्य देहक्षयं नरः ॥ ११
दैवं तात न पश्यामि नास्ति दैवस्य साधनम् ।

C. 12. 10708
B. 12. 291[90]. 13
K. 12. 296. 13

कथयिष्यामि. — b) G1 महा- (for यथा). — d) K7 पप्रच्छे; Dn4 पपृच्छ. K6 नृप.

4 D5 missing (cf. v. l. 1). Before 4, K6 V1 B1-9 Da3. a4 T G1. 3 ins. जनक उवाच. — a) T G1-3 -लोकानाम् (for -भूता°). — V1 reads 4b–5c on marg. — b) T G1. 3 इह (for अस्मिँल्लॅ). — K2. 4 om. (hapl.) 4c–6b. — c) K1. 6. 7 V1 Bo. 6 (marg). 8 D4. 9 G3 प्रतिकर्तव्यं; M5 °वक्तव्यं (for °पत्तव्यं). — d) K7 तद्भावान्; G1 भगवान् (for तद्भवान्).

5 D5 missing (cf. v. l. 1). K1. 2. 4 om. 5 (for K2. 4, cf. v. l. 4). Before 5, B8. 9 T G1 ins. भीष्मः. V1 reads 5abc on marg. — b) Dn4 -धर्मे (for -धर्म-). G1 -विनाशवित् (for -विधान°). — d) Da4 वचनम् (for वाक्यमथ).

6 D5 missing (cf. v. l. 1). K2. 4 om. 6ab (cf. v. l. 4). Before 6, MSS. ins. पराशर उवाच. — a) K1 M1. 6 परं; D6 M5 परः (for कृतः). K7 M1 श्रेय (for श्रेयान्). — c) K6 V1 B7. 8 (marg. as in text). 9 Da4 D7 T1 G1 धर्माद् (for तस्माद्). T1 G1 अभ्यधिकं; G3 धर्मात्परं (for हि परमं). — d) G2 तथा (for यथा).

7 D5 missing (cf. v. l. 1). — a) D4 नरा (for नरो). K1 धर्मे; K7 धर्मः (for धर्मं). — c) K6 निधिर् (for -विधिर्). D7 T G1. 3 धर्मात्मकं कर्म विद्धि (T1 °संविधिर्). — d) T1 देहानां (for देहि°). — f) T G1-3 M1. 5-7 स्वधर्मानिह (G2 °णि ह) कुर्वते.

8 D5 missing (cf. v. l. 1). — a) V1 Bo. 7. 8 Dn1. n4 D8 D2. 3. 6. 8 लोकेस्मिन् (for लोकस्य). — b) Dn4 विधीयते (for विधी°). — c) M5 एव (for यत्र). K1 M1. 5-7 -तिष्ठंति (for -तिष्ठन्ते). — d) K1. 6. 7 G2 कामान् (for कामात्).

9 D5 missing (cf. v. l. 1). — a) K1 स्वकृतासुकृतं; K2 सुकृतास्वकृतं; B8 स्वकर्मानुकृतं; D7 G1. 3 सुकृता हि कृतं; G2 सुकृतारसुकृतं; M1. 6. 7 सुकृतं सुकृतं (for सुकृतासुकृतं). — b) K6 V1 B6-9 Da3. a4 D6 G3 निषेव्यं. D4 क्रमे (for क्रमैः). — c) D4 दशार्धं- (for दशार्ध-). K1 -विप्रभक्तानां; K6 B8 (marg.) -प्रतिभक्तानां; G3 -प्रविविक्तानां (for °भक्तानां). — d) D8 T1 G1. 3 M1. 5-7 विविधा (for बहुधा). K6 B7. 9 Da3. a4 मतिः (for गतिः).

10 D5 missing (cf. v. l. 1). — a) Da4 सोवर्ण-. K3 D7 T1 G3 रजतं (for राजतं). K6. 7 B1-9 Da3. a4 Dn1. n4 Ds1 D2. 4. 6. 8. 9 चापि; G2 चैव (for वापि). — b) Dn4 तथा (for यथा). K1 निषद्यते; V1 Bo. 7-9 Da3. a4 निषेव्यते; D7 निहन्यते (for निषिच्यते). — c) K1 निषिचते; V1 Bo. 7-9 Da3. a4 निषेव्यते; G2 निषिञ्चते (for °च्यते).

11 D5 missing (cf. v. l. 1). — a) D7 T1 G1. 3 नाबीजं (for °जाज्). G2. 3 जंतुर् (for किंचिन्). — b) K6 नाकृता (sic); G3 न कृत्वा (for नाकृत्वा). — c) K6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 G2 M1. 5-7 सुकृतैर् (for सुकृती). K1 निंदति; K6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D1-4. 8 विंदते; D9 विदिते (for विन्दति). K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2-4. 6. 8 सौख्यं (for सुखं). — d) D7 T1 -क्षयान्; D9 -क्षये (for -क्षयं).

12 D5 missing (cf. v. l. 1). — a) K1. 2. 4 देवं; K7 दैवात्; D4 देवात् (for दैवं). Ds1 D2. 3 दैवतं तात पश्यामि; T1 G2. 3 दैवतानि (G1 °नीव; G3 °नि ह)

C.12.10709
B. 12.291(90).13
K. 12.296.19

स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः ॥ १२
प्रेत्य जातिकृतं कर्म न स्मरन्ति सदा जनाः ।
ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् ॥ १३
लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः ।
शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम् ॥ १४
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते ॥ १५
निरन्तरं च मिश्रं च फलते कर्म पार्थिव ।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते ॥ १६
कदाचित्सुकृतं तात कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥ १७
ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते ।
सुकृतक्षयाद्दुष्कृतं च तद्विद्धि मनुजाधिप ॥ १८
दमः क्षमा धृतिस्तेजः संतोषः सत्यवादिता ।
ह्रीरहिंसाव्यसनिता दाक्ष्यं चेति सुखावहाः ॥ १९
दुष्कृते सुकृते वापि न जन्तुरयतो भवेत् ।
नित्यं मनःसमाधाने प्रयतेत विचक्षणः ॥ २०
नायं परस्य सुकृतं दुष्कृतं वापि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥ २१
सुखदुःखे समाधाय पुमानन्येन गच्छति ।

---

पश्यामि. — [b]) $K_{1.2.4}$ $Da_4$ $D_4$ $T_1$ $G_{1-3}$ देवस्य ( for दैवस्य ). $T_1$ $G_{1-3}$ मानुषं (for साधनम् ). — [c]) $T_1$ $G_{1-3}$ [ऽ]पि ( for हि ). — [d]) $D_8$ -मानवाः ( for -दानवाः ).

13 $D_5$ missing ( cf. v. l. 1 ). — [a]) $K_{1.2}$ ये स्व-; $K_4$ प्रैत्य ( for प्रेत्य ). $Dn_1$ यांत्यकृतं; $D_8$ (marg.) यांति कृतं ( for जातिकृतं ). — [b]) $G_2$ गताः ( for जनाः ). — [c]) $K_2$ तैर्; $Dn_4$ $D_{4.9}$ न ( for ते ). $Ds_1$ तस्याः; T $G_{1.3}$ तस्यां ( for तस्य ). $B_8$ (marg.) तेनैतस्य ( for ते वै तस्य ). $V_1$ फलप्राप्ताः; $D_{4.8}$ °प्राप्तः; $G_1$ बलप्राप्तौ; $G_2$ फलं प्राप्ताः; $M_6$ फलं प्राप्तौ. — [d]) $K_6$ $D_{4.9}$ $T_1$ $G_1$ वा ( for च ).

14 $D_5$ missing ( cf. v. l. 1 ). $K_7$ om. ( hapl. ) $14^a$–$15^b$. — [a]) T $G_{1-3}$ -सुखस्य ( for -श्रयश्च ). $B_7$ $Da_{3.a4}$ T $G_{1.3}$ $M_{1.5-7}$ [ए]ष; $B_8$ (marg.) [अ]सि; $G_2$ [ए]षा ( for [ए]व ). — [b]) $B_8$ सर्वे- ( for शब्दो ). $K_1$ $M_{5.6}$ दैवाश्रयः; $K_2$ $V_1$ $B_8$ ( marg. as in text ) $G_1$ $M_{1.7}$ देवा°; $D_7$ यात्रा°; $G_2$ वासंशयः ( for वेदाश्रयः ). — [c]) $K_4$ शांत्यर्थे. $K_{1.6}$ मनसा ( for मनसस् ). $T_2$ तावन् ( for तात ).

15 $D_5$ missing ( cf. v. l. 1 ). $K_7$ om. $15^{ab}$ ( cf. v. l. 14 ).

16 $D_5$ missing ( cf. v. l. 1 ). $K_{2.4}$ om. ( hapl. ) 16–21. — [a]) $D_9$ निरंतरे. $V_1$ विश्रब्धं ( for मिश्रं च ). — [b]) $K_1$ $M_{1.5-7}$ फलं ते; $K_6$ $V_1$ $Bo_{.6-9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $D_{2.3.6.8}$ लभते ( for फलते ).

17 Quoted in Śaṁkara's Vedāntasūtra-bhāṣya on III. i. 8. $D_5$ missing ( cf. v. l. 1 ). $K_{2.4}$ om. 17 ( cf. v. l. 16 ). — [b]) $G_{1.3}$ करस्थम् ( for कूट° ). $K_7$ $V_1$ $D_4$ इति ( for इव ). $K_6$ तिष्ठते; $B_3$ ( marg. as in text ) पश्यति ( for तिष्ठति ).

18 $D_5$ missing ( cf. v. l. 1 ) $K_{2.4}$ om. 18 ( cf. v. l. 16 ). — [c]) Hypermetric. $D_8$ सुकृत्; $G_1$ कृत- ( for सुकृत- ). $D_6$ -भयाच् ( for -क्षयाद् ). $Dn_{1.n4}$ $D_6$ च दुष्कृतं ( by transp. ); $D_3$ दुष्कृतश्च. $Da_4$ सुकृतक्षयदुष्कृतं. — [d]) $Da_4$ तं ( for तद् ).

19 $D_5$ missing ( cf. v. l. 1 ). $K_{2.4}$ om. 19 ( cf. v. l. 16 ). — [a]) $G_3$ दमं. — [b]) $K_1$ संतोषाः; $D_3$ संतोषं. — $Da_4$ om. $19^{cd}$. — [c]) $D_4$ $G_3$ व्यवसिता; $K_7$ $G_2$ [अ]वनतृता ( sic ) ( for [अ]व्यसनिता ). — [d]) $G_1$ दाक्षं; $Dn_4$ दाक्षे ( for दाक्ष्यं ). $G_2$ चैतद् ( for चेति ). $K_1$ $B_3$ $G_2$ सुखावहं; $D_4$ °वहा ( for °वहाः ).

20 $D_5$ missing ( cf. v. l. 1 ). $K_{2.4}$ om. 20 ( cf. v. l. 16 ). — [a]) $K_7$ $D_{4.9}$ सुकृते दुष्कृते ( by transp. ); $D_7$ सुकृतं दुष्कृतं; T $G_{1.3}$ $M_{1.5-7}$ दुःखितः सुखितो. $V_1$ $Bo_{.6-9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.6-8}$ च ( for वा ). $K_{1.7}$ — [b]) $K_1$ जंतुर्न ( by transp. ); $D_7$ न जंतोर्. T $G_{1.3}$ $V_1$ $Bo_{.6}$ ( marg. ).7.8 $Dn_{1.n4}$ $D_8$ $D_{2.3.6.8}$ नि( $G_1$ नी )यतो; $D_7$ अपरो ( for अयतो ). — [c]) $D_3$ समाधाय; $G_1$ -समाधेन ( for °धाने ).

21 $D_5$ missing ( cf. v. l. 1 ). $K_{2.4}$ om. 21 ( cf. v. l. 16 ). — [a]) $D_7$ परं च ( for परस्य ). $Da_4$ सततं ( for सुकृतं ). — [b]) $K_6$ $B_{6.9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $D_{3}$ दुष्कृतं कर्ममेव च. $D_{8.6-8}$ $T_1$ $G_3$ च ( for वा ). $V_1$

22 $D_5$ missing ( cf. v. l. 1 ). — [a]) $T_2$ $G_{1.3}$

...न्येनैव जनः सर्वः संगतो यश्च पार्थिव ॥ २२
...तेषां यदसूयेत न तत्कुर्यात्स्वयं नरः ।
...ो ह्यसूयुस्तथायुक्तः सोऽवहासं नियच्छति ॥ २३
भीरू राजन्यो ब्राह्मणः सर्वभक्षो
वैश्योऽनीहावान्हीनवर्णोऽलसश्च ।
विद्वांश्चाशीलो वृत्तहीनः कुलीनः
सत्याद्भ्रष्टो ब्राह्मणः स्त्री च दुष्टा ॥ २४
रागी मुक्तः पचमानोऽऽत्महेतो-
र्मूर्खो वक्ता नृपहीनं च राष्ट्रम् ।
एते सर्वे शोच्यतां यान्ति राज-
न्यश्चायुक्तः स्नेहहीनः प्रजासु ॥ २५

C. 12. 10722
B. 12. 291(90).26
K. 12. 296. 26

इति श्रीमहाभारते शान्तिपर्वणि एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

---

...समादाय; G2 °नीय (for °धाय). — b) K4 अप्येन (sic); T1 G1 अर्येन (for अन्येन). — c) K7 D4.9 सर्वेन (for अन्येन). K1 सर्वाः; K7 सर्वं. — d) Da3 D4 संगता (for °गतो). K7 D4.9 यः स; Da4 यस्य (for यश्च). K4.6.7 Bo.6.8.9 Dn1 D2–4.6.8.9 G1 पार्थिवः.

23 D5 missing (cf. v. l. 1). — b) K6 V1 Bo. 6.8 (marg. as in text).9 Da3 D6 तन्न (by transp.); Da4 Ds1 तत्र; D3 तं न. Bo.8 Ds D3.6 जनेश्वर; G2 स्वयं नरं (for स्वयं नरः). — c) K7 Da3.a4 ह्यसूयस्; T1 G1.3 [s]भ्यसूयु( T1 °य )स् (for ह्यसू°). K1.2.4 तथासक्तः; M1.5–7 °युक्तं (for °युक्तः). Dn1 यो ह्यसूयथा युक्तः. — G2 lacuna for 23d–24b. — d) T G1.3 [s]पहासं; M5.7 [s]व( M7 °प )हास्यं (for ऽवहासं). K7 D4.9 T G1.3 M1.5–7 निगच्छति.

24 D5 missing up to विद्वांश्चाशीलो in 24c (cf. v.l. 1). G2 lacuna for 24ab (cf. v. l. 23). Before 24, Dn4 Ds D2.3 (marg. *sec. m.*).3 ins. भीष्म उवाच. — a) V1 भीतो (for भीरू). K1.2.4 B6 Dn1 Ds D2–4.6 -भक्ष्यो; D8 -भैक्ष्यो (for -भक्षो). — b) T1 G1 [s]नीहो (for ऽनीहावान्). — c) K6 B6–9 Da3.a4 दुःशीलो (for चाशीलो). D5.7 T2 हीनवृत्तः (for वृत्तहीनः). Da4 G1 om. कुलीनः. — d) B8 D4.5.7.9 सत्य-; G1.3 सत्त्वाद् (for सत्याद्). K4.7 Bo.7.9 Dn1 Ds1 D2.3.6.8 G2 M8 विभ्रष्टो; Dn4 विभ्रष्टे (for भ्रष्टो). K4.6 Dn4 D2.6.8 T2 G1.2 M1.5–7 ब्रा( M1 ब्र )ह्मण-; K7 D9 धार्मिकः (for ब्राह्मणः).

25 a) Bo.6.9 Da3.a4 Dn1.n4 Ds2 (by corr. as in text) युक्तः; D7 दुष्टः; M1.5.6 मत्तः (for मुक्तः). K1.4 पाचमानः; K2 Da3.a4 Ds1.s2 (by corr. as in text) पंचमानः; K6 पवमानो (for पच°). K1.2 स्वहेतोर्; K6 [ss]त्मार्थहेतोर्; V1 Bo.6 (marg. as in text) [s]र्थहेतोर् (for ऽऽत्म°). G1.2. पच( G2 °व )मानात्महेतोर्. — b) T1 G1 M7 मूढो (for मूर्खो). K6 -हीनश्; Ds1 D6 lacuna; D7 युक्ता (for वक्ता). K2.7 -मानं (for -हीनं). — c) G3 येते (for एते). Da4 यावि (for यान्ति). T1 (also as in text) येते सर्वे संशोच्यतां यांति राजन्. — d) K1.2.4 G2 च मुक्तः; D4.9 G1.3 M1.5–7 चामुक्तः (for चायुक्तः). B7 प्रजायुः; D6 प्रजावान् (for प्रजासु).

Colophon om. in D6; Ś1 G6 missing: K3.5 Da1.a2 Dn2.n3 D1 G4.5 M2–4 absent. — *Sub-parvan*: K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–5.7–9 T G1–3 M1.5–7 मोक्षधर्म. — *Adhy. name*: K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 G2 M5.6 पराशर( K7 °शरी°; B6 °सर )गीता; D4.5.7.9 पराश( D4 °स )रगीतासु ( D7 °यां ) धर्मप्रशंसा; M5.6 पराशरगीतासु श्रेयःसाधनकथनं. — *Adhy. no.* (figures, words or both): K6 15; B7 T1 G1.3 114; B9 D8 110; Dn1 116; Dn4 Ds M5 115; T2 127; G2 130; M1.6.7 113. — *Śloka no.*: Da4 Dn1.n4 26; D8 22.

C. 12. 10996
B. 12. 300(299).5
K. 12. 305. 5

कस्मिन्मनस्ते रमते महात्मन् ॥ ५
तन्नः कार्यं पक्षिवर प्रशाधि
यत्कार्याणां मन्यसे श्रेष्ठमेकम् ।
यत्कृत्वा वै पुरुषः सर्वबन्धै-
र्विमुच्यते विहगेन्द्रेह शीघ्रम् ॥ ६
हंस उवाच ।
इदं कार्यममृताशाः शृणोमि
तपो दमः सत्यमात्माभिगुप्तिः ।
ग्रन्थीन्विमुच्य हृदयस्य सर्वा-
न्प्रियाप्रिये स्वं वशमानयीत ॥ ७
नारुंतुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ ८
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ ९
परश्चेदेनमतिवादबाणै-
र्भृशं विध्येच्छम एवेह कार्यः ।
संरोष्यमाणः प्रतिमृष्यते यः
स आदत्ते सुकृतं वै परस्य ॥ १०

---

7. 8 (marg.). 9 Da3, a4 D6. 7 G6 श्रेष्ठतरं. — d ) Da4 यदात्मन् (for महा°).

6 a ) K2 तनु:; K4 ततः; Ds1 सन्नः (for तन्नः). D4, 9 कार्यं (for कार्यं). D4 पक्षिवरः; G3 पक्षिराज (for °वर). V1 -प्रवरादिते (for -वर प्रशाधि). — b ) M1, 7 यं (for यत्). — d ) Dn4 विमुढा ते; D5, 7 प्रमुच्यते (for विमु°). K2 विहगेंद्रो ह; Da4 °गेंद्र (for °गेन्द्रेह).

7 a ) Da4 कार्यो (for कार्यम्). K6 Da4 अमृताशा; D4 अमृताश्यः; T1 अमृतांतं; G2 अमृतकार्या; G6 मृतांतं (for अमृताशाः). D8 मुमुक्षवस; T G2, 6 M1, 5–7 शृणुध्वं (for शृणोमि). G1 अमृतं शाशृणुध्वं. D5, 7 इदं कार्याशाममृताशः शृणोमि. ❀ Cn: अमृताशाः, अमृतभुजः । ❀ — b ) K2 दमं; G2 शमो (for तपो). K1, 4 T G1, 6 दमं; K2 तपः (for दमः). K1, 2, 4 T1 G1, 6 -गुप्तं; V1 B8 -गुप्तिं (for -गुप्तिः). — c ) K1 गंतीन्; D7 T1 ग्रंथीन्; G8 ग्रंथिं (for ग्रन्थीन्). K6 विमुच्यते; G1 आन्मुच्य (for विमुच्य). K1, 2, 4 हृदयस्येह (for °यस्य). K7 सर्वा; Dn1 सर्वाः; G8 सर्वं (for सर्वान्). ❀ Ca, n, p: ग्रन्थीन्, रागादीन् । ❀ — d ) D4, 5, 7 प्रियाप्रियं (for °प्रिये). D6, 7 G3 स्व- (for स्वं). K1 आनयते; K2 °येति; K4 °येत; D7 मानयीत (for आन°).

8 With 8, cf. Manu. 2. 161. — a ) K4 Dn4 नाहंतुदः; Ds2 अरुं° (for नारुं°). G1 नृशंस्य- (for नृशंस-). ❀ Cn: अरुंतुदः, मर्मच्छित् ॥ Cs: अतिदुर्जनवचनः । ❀ — b ) K2, 3, 4 अभ्याददीत ❀ Cn: परम्, शास्त्ररहस्यम् । ❀ — c ) K1, 4 Da4 यथा (for यया). K4 परम; D5 परम् (for पर). Ds1 उद्विजेति; D1 °जेच्च (for °जेत). — d ) K1, 2, 4 Ds1 रुषतीं; K6 V1 Bo. 7–9 Dn1, n4 D2, 3, 5, 7, 8 Cn. 8 (gloss: अकल्याणीं, अहितकरीम्) उषतीं; B6 Da3 Ds2 (by corr. as in text) T1 G1, 3, 6 उशतीं; Da4 उशीतिं; D4 द्रुमही (sic); G1 उशंतीं (for रुशतीं). D4, 9 -लौक्यां (for -लोक्याम्). ❀ Cn: पापलोक्यां, नरकप्रदाम् ॥ Cs: नरकलोकनिमित्तभूताम् । ❀

9 a ) K1 वचनान् (for वद°). M1, 5–7 निष्पतंतो. — b ) G2 आहरतः (for आहतः). B6 शोचते. — c ) K1, 2, 4 ते मर्मसु; V1 नो म°; T G3, 6 वै म°; G1 वै क°; G2 हा म° (for नाम°). K1, 2, 4 वै (for ते). K7 वदंति (for पतन्ति). M1, 5–7 परस्यान्तां मर्मसु ते पतंति. — d ) M1, 5–7 परस्मै (for परेषु).

10 a ) K2 G2 परश्छेद्; Dn4 परं चेद्; Ds1 परस्चेद् (for परश्चेद्). Ds2 D8 (marg. as in text) M5–7 अतिविध्येत बाणैर्. — b ) K1 विधेत् (for विध्येत्). G1 शमम् (for शम). K7 om. इह. — c ) K1, 2 D5, 7 संरोष्यमाणं; G6 संरोषमाणः; Ds1 D4 संरोप्य°; G8 संरोषमाणः (for °माणः). D4, 5, 7, 9 G2 M1, 5–7 परि- (for प्रति-). K2 -मिश्रिते; K4, 6 B7–9 Da3, a4 Dn1, n4 Ds1 D3, 8, 8 -हृष्यते; Bo. 6 -कुप्यते; Ds2 -दुष्यते (for -मृष्यते). Da3, a4 च; G2 ह्यः (for यः). — d ) K6 आदत्ते स (by transp.); D5, 7 सोप्यादत्ते. K2 स्वकृतं वै; D1 V1 B8, 9 वै सुकृतं (by transp.). K1, 2, 4 परेभ्यः; D6–8 परेषां (for परस्य).

क्षेपाभिमानादभिषङ्गव्यलीकं
निगृह्णाति ज्वलितं यश्च मन्युम् ।
अदुष्टचेता मुदितोऽनसूयुः
स आदत्ते सुकृतं वै परेषाम् ॥ ११

आक्रुश्यमानो न वदामि किंचि-
त्क्षमाम्यहं ताड्यमानश्च नित्यम् ।
श्रेष्ठं ह्येतत्क्षममप्याहुरार्याः
सत्यं तथैवार्जवमानृशंस्यम् ॥ १२

वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषन्मोक्ष एतत्सर्वानुशासनम् ॥ १३

वाचो वेगं मनसः क्रोधवेगं
विवित्सावेगमुदरोपस्थवेगम् ।
एतान्वेगान्यो विषहत्युदीर्णां-
स्तं मन्येऽहं ब्राह्मणं वै मुनिं च ॥ १४

अक्रोधनः क्रुध्यतां वै विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषान्मानुषो वै विशिष्ट-
स्तथाज्ञानाज्ज्ञानवान्वै प्रधानः ॥ १५

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ १६

C. 12. 11007
B. 12. 300(299). 16
K. 12. 305. 16

---

11 D4.5 om. (hapl.) 11. V1 reads 11 on marg. — a) K1 क्षेमाभिमानाद्; K6 V1 B8.9 G2 क्षेपावमाण(K6 G2 °न)म्; K7 D9 M5.7 °वमानाद्; Bo.6 (marg.) °पमान(Bo °ण)म्; B6.7 Da3.a4 Dn1.n4 Ds D2.3.8 Cn (gloss: अधिक्षेपकारिणम्) °यमाणम् (Dn1.n4 Ds1 °नम्); T G1.6 °वमानाद् (for °भिमानाद्). B7 अभिसंग-; Ds1 T G1.3.6 Cs (gloss: पराभवम्) °षंगं (for °षङ्ग-). K1.2.4 V1 T1 -व्यलीक(T1 °का)कान्; K7 D9 -व्यलीके; T2 G1-3 M5-7 -व्यलीकं (for -व्यलीकं). D7 क्षिप्ताभिमानाभिषंगी व्यलीकं; M1 क्षेपावमानाभिषंगं व्यलीकं. ❀ Cn: अभिषङ्गव्यलीकम्, अभिनिवेशवशादप्रियम् । ❀ — b) K6.7 निगृह्णाति. M7 मन्युः. — c) B7 Dn1 D8 T1 अदृष्ट-; G1 अदिष्ट- (for अदुष्ट-). B9 Ds2 मुदितोनसूयः; Ds1 D3 °नुसूयुः; G1 मुदितानुसूर्यः. — d) B8 न (for स). K2 स्वकृतं वै; K7 Da3.a4 वै सुकृतं (by transp.). K6 B7 Da3.a4 परस्य (for परेषाम्).

12 a) K7 आक्रुश्यमाना; Bo आक्रुष्यमानो; Da3.a4 D4.9 आक्रुष्यमाणो; Ds1 D2.8 आक्रुश्य(Ds1 °ष्य)मानो; Ds1 (by corr. as in text) आक्रुष्यमाणो (for आक्रुश्यमानो). — b) T2 क्षिपामि (for क्षमामि). K7 ताम्यमानश्च; D5.7 ताप्य° (for ताड्य°). — c) T G1.3.6 श्रैष्ठ्यं (for श्रेष्ठं). K6 Da3 Dn4 Ds1 D2.8 (by corr.).8 यत्क्षमाम्; K7 D4.9 क्षमिणम्; B8 क्षेमम्; Da4 corrupt; D3 (before corr.) यत्क्षमम्; D5.7 क्षमणम्; T G2.3.6 M7 क्षमम्; G1 M1.5.6 क्षमाम् (for क्षममपि). K7 D4.5.7.9 प्राहुर्. — d) G1 तवैव (for तथैव).

13 c) G2 त्याग (for मोक्ष). — d) K1.2.4 सत्यानुशासनं; G2 M5.7 सत्त्वा° (for सर्वा°).

14 a) Bo वाच्य-; D5 वचो- (for वाचो). K7 G2 मनसा. — b) K4.6 Bo.6 (marg.).7-9 Da3.a4 Dn1.n4 Ds D2.3.8 Cn (gloss: विशिष्टा पिपासा, घेट्ट पाने अस्य रूपम्, तृष्णावेगमित्यर्थः) विधित्सा-; G3 विवत्सा-; Ca (gloss: विदेर्लाभार्थरूपम्, लिप्सा) Cv (gloss: विचारः) विवित्सा- (as in text). — c) K7 om. यो. K6 V1 B7 B6 Da3.a4 Dn1 D2.3 G1 विषहेद्; Bo विहसेद्; B7 विषयेद्; Dn4 Ds1 D8 विसहेद्; Ds2 विहंसेद्; G6 विषह्यति (for °हति). — d) G3 मुनिश्च (for मुनिं).

15 a) K7 B7 अक्रोधन; M7 °धनं (for °धनः). K1.7 B7 क्रुध्यता; Bo क्रोध्यतां; Da4 T G1.3.6 क्रुध्यतो (for क्रुध्यतां). — K6 D5 om. (hapl.) 15bc. — c) K7 मानुषो वै D7 G2 अमानुषाणां (for °नुषान्). — d) Da3 Dn4 Ds1 विशिष्टं; G2 मानुषाश्च प्रधानास्. D5.7 G2 M1.5-7 [अ]ज्ञानां [अ]ज्ञाना; D4 lacuna; V1 Bo.8 (marg.) Dn1.n4 Ds (for [अ]ज्ञानाज्). K1.4 V1 D2.3.8 G1.2 M1.5-7 ज्ञानविद् (for °वान्). K2 Bo.8 Da3.a4 Dn1.n4 Ds D2.3.8 G1.3.6 M6 (before corr.) वै (G1 यो) विशिष्टः; D5.7 संप्रधानः (for वै प्रधानः).

16 a) K2 आक्रुच्यमानो; K4 आक्रुध्य°; B9 Da4 आक्रुष्यमाणो (B9 °नो); D4.9 आक्रुश्यमाणो; Cs आक्रोश्यमानो (for आक्रुश्य°). K2 नाक्रुच्येन्; K4 Bo.6.9 Dn1.n4 Ds2 D2.3.5.7.8 T1 G3.6 °क्रुश्येन्; Ds1 °क्रुष्येन्; G1.2 °क्रोशे (for °क्रोशेन्). — b) Bo Dn1.n4 Ds1 D2.3.8 एतं; V1 Ds1 (by corr. as in text) V1 B (marg.) तितिक्षति; T2 तितीएवं (for एव).

C. 14. 11008
B. 12. 300(299). 17
K. 12. 305. 17

यो मात्युक्तः प्राह रूक्षं प्रियं वा
यो वा हतो न प्रतिहन्ति धैर्यात् ।
पापं च यो नेच्छति तस्य हन्तु-
स्तस्मै देवाः स्पृहयन्ते सदैव ॥ १७
पापीयसः क्षमेतैव श्रेयसः सदृशस्य च ।
विमानितो हतोऽऽक्रुष्ट एवं सिद्धिं गमिष्यति ॥ १८
सदाहमार्यान्निभृतोऽप्युपासे
न मे विवित्सा न च मेऽस्ति रोषः ।
न चाप्यहं लिप्समानः परैमि
न चैव किंचिद्विषमेण यामि ॥ १९
नाहं शप्तः प्रतिशपामि किंचि-
द्दमं द्वारं ह्यमृतस्येह वेद्मि ।
गुह्यं ब्रह्म तदिदं वो ब्रवीमि
न मानुषाच्छ्रेष्ठतरं हि किंचित् ॥ २०
विमुच्यमानः पापेभ्यो घनेभ्य इव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण सिध्यति ॥ २१

---

क्षतः (for तिति°). G2 मृत्युरावन्तितिक्षति (sic). — c) K1 Da3 अक्रोष्टारं (for आक्रो°). — d) K4 चाप°; D4. 8 वास्य (for चास्य).

17 a) K4 यो नित्युक्तः (sic); K7 Da4 यो नान्युक्तः; D5. 7 T1 येनात्युक्तः; G1. 2 एनात्युक्तः (G2 °क्तं) (for यो ना°). D5. 7 तूष्णीं (for रूक्षं). Da3. a4 हितं (for प्रियं). D4. 9 रूक्षाप्रियं वा; T1 G1. 6 रुक्षास्तु वाचो; G3 रूक्षां तु वाचं (for रूक्षं प्रियं वा). — b) B8 (marg. as in text) यश्चाहतो; D5 **हतो; M1. 6. 7 यो हतो (for यो वा हतो). G2 वैरात् (for धैर्यात्). — c) D4. 9 तु (for च). K7 प्रति- (for तस्य). T2 G3 हंतुं (for हन्तुस्). — d) K2 स चैव (for सदैव). K4. 6 V1 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 D8 D2. 3. 8 तस्येह (K6 Bo. 6. 9 Da3. a4 °स्यैव; B8 °स्यै) देवाः स्पृहयंति (K6 B6. 8. 9 °तीह) नित्यं.

18 a) G2 पापीयसं (for °यसः). G1 किमेतैवैः; M1. 6 क्षमवैव (for क्षमे°). K4 पापसंक्षयमेतैव. — c) K7 Dn4 D4 विमानिनो (for °नितो). K1. 2 हतः क्लिष्ट; K6 B6. 7 हताक्रुष्ट; V1 Bo. 8 D3. 5. 7 हतोत्क्रुष्ट; B6. 8 (both marg.) [ऽ]थ वा क्रुष्ट; B9 हताक्लष्ट; Dn1 हतोक्रुष्ट (sic); D8 हतोत्क्रुष्ट; T G3. 6 हतः क्रुष्ट; G1 हताः क्रुष्ट (for हतोऽऽक्रुष्ट). — d) V1 संधिं (for सिद्धिं). K7 B6 D4. 9 गमिष्यसि.

19 a) G3 आर्यं (for आर्यान्). Dn4 निसृतो; M7 निभृत्य; C8 (gloss: निश्चलबुद्धिः) निभृतो (as in text). K7 B8 D4. 9 [ऽ]भ्युपासे; Da3. a4 T2 M1. 5–7 ह्युपासे (for ऽप्युपासे). — b) K6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Cn (gloss: तृष्णा) विधि(Da4 °धी)त्सा (for विवित्सा). K6 महते; K7 D4. 9 महतो; V1 Bo सहते; B6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Cn (gloss: उल्लसति) [उ]त्सहते (for न च मे). D5. 7 न मे विधि-

धर्महेतोर्न रोषः; T G1–3. 6 M1. 5–7 न मे वि(M6 ति)वित्सा संगतो (T1 °गते; G2 M1. 5–7 °हतो) नोत (G3 नेह) बाधः. ❀ Ca: विधित्सा व्यधेः रूपम्, ताडनेच्छेत्यर्थः । ❀ — c) K4 Dn1. n4 D8 D2. 3. 5. 8 वा (for च). Da4 [अ]स्यहं (sic); G2 [अ]प्यन्यं; M1 [अ]व्यंगं (for [अ]प्यहं). G1 परैर्वा (for परैमि). D1 नावाप्यह लिप्समानाः परैमि (corrupt.). — d) K7 B8 D4. 9 T G1–3. 6 M1. 5–7 चापि (for चैव). K2 Da3 D7 T G1. 3. 6 विषमे नयामि; K7 B6 Dn1. n4 Ds1 D2. 3 M7 विषयेण यामि; Da4 विषये मे नयामि; Ds1 D5 विषयेन यामि (for विषमेण यामि).

20 a) K1 शस्तः; D2 सप्तः (for शप्तः). Dn1 -यायामि; Ds2 -शप्तासि (for -शपामि). K1. 4. 7 Bo. 6–9 Da3 Dn1. n4 Ds2 D2. 3. 5. 7. 8 कंचिद् (for किंचिद्). — b) K4 D5. 7 धर्मं; K6. 7 D4. 9 शमं; B8 शम°; T1 इमं; G3 दमो; G6 इदं (for दमं). K1. 2. 4 D4. 9 T1 G6 M1. 7 अमृतस्य (for ह्यमृ°). K1. 2. 4 [अ]पि; K6 D3 [इ]व; D8 [ए]व; D4 [अ]हं (for [इ]ह). Dn4 Ds1 वेत्सि; D4 वसि (sic) (for वेद्मि). — c) D5. 7 ब्राह्मं (for ब्रह्म). K1. 4 B8 D2. 8 lacuna; K2 वा; T1 वै; T2 यो (for वो). T2 ब्रवीति (for ब्रवीमि). — d) T G3. 6 मानुष्यात्; G2 मानुषं (for मानुषात्). K6 D4. 9 श्रेष्ठतमं (for °तरं). M6 कश्चिद्.

21 a) K7 V1 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5. 7. 8 निर्मुच्यमानः. — b) K7 D4. 9 M1 मेघेभ्य (for घनेभ्य). K4 Da4 M7 चंद्रमा. — c) विरजः (for विरजाः).

22 Before 22, T1 ins. हंसः. — a) D5. 7 ब्रह्मचारी (for ह्यर्चनीय). — b) K6 B5. 9 उत्सेधवान्; K7 D4. 9 G1 उत्सेधने; V1 Bo. 7 Dn1. n4 D3 D2. 3. 8 धन-; B8 °दन-; D5 उत्सेध*; D7 उत्सेधमं;

यः सर्वेषां भवति ह्यर्चनीय
उत्सेचने स्तम्भ इवाभिजातः ।
यस्मै वाचं सुप्रशस्तां वदन्ति
स वै देवान्गच्छति संयतात्मा ॥ २२

न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान् ।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ २३

यस्य वाङ्मनसी गुप्ते सम्यक्प्रणिहिते सदा ।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ २४

आक्रोशनावमानाभ्यामबुधाद्वर्धते बुधः ।
तस्मान्न वर्धयेदन्यं न चात्मानं विहिंसयेत् ॥ २५

अमृतस्येव संतृप्येदवमानस्य वै द्विजः ।
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥ २६

यत्क्रोधनो यजते यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं
मोघः श्रमो भवति क्रोधनस्य ॥ २७

चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक्चतुर्थी स धर्मवित् ॥ २८

सत्यं दमं ह्यार्जवमानृशंस्यं
धृतिं तितिक्षामभिसेवमानः ।

C. 12. 11020
B. 12. 300[299] 29
K. 12. 305. 29

---

T1 G3.6 °वने; T2 °धनैः; Cn (gloss: उत्तम्भन-करः, ब्रह्माण्डमण्डपस्तम्भभूतः) °धनः (for उत्सेचने). K1 उत्सेचरैः त(*sup. lin.* स्त)स्व इवाभिजातः (sic). ❀ Ca: उत्सेचने, जलसारणीसमीपे स्तम्भो, वृक्षः। सति सेके संवर्धते शाखादिमत्त्वात्। ❀ — c) M5–7 तस्मै (for यस्मै). Dn4 वाद्यं; D6 वाचः (for वाचं). K6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 G2 सुप्रसन्नां (for °शस्तां). — d) K2 वेदान् (for देवान्). K3 G1 संश°यात्मा (for संयतात्मा).

23 b) K2.4.7 D4.5.7.9 कल्याणं (for कल्याणान्). K1.2.4 पुरुषेतरान्; D4.9 °षे गुणं; D5 °षो जनः; D7 °षे जनाः (for °षे गुणान्). — c) D4 तथैषां; T G6 यथैवं; G1 यथैव (for यथैषां). — d) V1 नैर्गुण्यं पापचेतसः. ❀ Cn: अनुयुञ्जकाः, स्पर्धावन्तः। ❀

24 With 24, cf. Manu. 2. 160. — a) K1 तस्य (for यस्य). D5.7 युक्ते (for गुप्ते). — b) K7 B6 (marg. as in text).7 Da3.a4 सम्यक्शुद्धे च सर्वदा. — d) D5.7 धर्मम् (for सर्वम्). T1 G1.6 इदं सर्वमवाप्नुयात्.

25 a) K1.2.4 अक्रोध(K4 °श)नावमानाभ्याम्; B7.8 Da3.a4 Dn4 Ds D2.3.8 आक्रोशनविमा°; Dn1 आख्यानविमा°; M1.5–7 इहाक्रोशावमा°. — b) K2.4 अबुधाद्; T2 अबुद्धाद्; M5 अबुद्ध्या (for अबुधाद्). M1 धर्मते (sic) (for वर्धते). K1 युधः (sic); K4 बुधः (for बुधः). K6 V1 B0.6–9 Da3 ना(Da3 मा)बुधान्वर्धयेद्बुधः; K7 D4.9 अबुद्धो वर्धयेद्बुधान्; Da4 Dn1 Ds D2.8 (before corr.).8 न(Dn4 [illegible])बुधानबो[illegible]र्धयेद्बुधः; Dn4 D8 नाबुधान्ना(Dn4 °ना)र्हयेद्बुधः; D5.7 अबुद्धो गर्हयेत्परान्; T1 G1.3.6 अ(G3 [before corr.] मा)बुद्धो व(G1 °द्धाद्व-; G3 °धो व)र्तेत बुधः (G1 °द्धाः). — c) Dn4 Ds2 (marg. *sec. m.*) D3 (marg. *sec. m.* as in text).5.7 गर्हयेद् (for वर्ध°). M1.5–7 अन्यान् (for अन्यं). G1 तस्मान्न वध्यते यद्यन्. — d) K6 वा (for च). G1 न हिंसयेत् (for विहिं°).

26 ab) B6 transp. अमृतस्येव and अवमानस्य. B8 अमृतस्यैव (for °स्येव). D4 संपश्येद् (for °तृप्येद्). K1.2.4 वै बुधः; K6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 पंडितः (for वै द्विजः). — c) K4 अमवतः; G1 अवमितः (for °मतः). — d) K1.2 योवसंता (for °मन्ता). — After 26, G3 ins. an addl. colophon [*Adhy. no.*: 123].

27 a) B7.9 Da3.a4 D9 यः (for यत्). K3 क्रोशनो (for क्रोधनो). K4 Da4 Dn1.n4 Ds D2.3.8 M5 यजति; D7 ददते (for यजते). K1 दधाति; Dn4 ददामि (for ददाति). M1 यत्क्रोधनो यजयेद्ददाति. — b) D5.7 यद्यत्तपस; G1 यच्चात° (for यद्वा त°). D5.7 तपते (for तप्यति). — c) K1.2 हरेव (for हरते). Da3 K6 चास्य; D5.7 G1 तस्य (for ऽस्य). — d) K4 V1 B0.6–9 Da4 Dn1.n4 Dn4 Ds1 M7 मोघश्रमो. K7 हि भवति (for भवति). Ds D2–5.7–9 G2 M7 भवति हि;

28 = (var.) 12. 261. 27. — b) K1.4 सुगुप्तानि महात्मनः; D5.7 °न्युत्तरोत्तरं. — c) M1.5–7 उपस्थ (for उपस्थम्). B8 (marg. as in text) जिह्वा (for हस्तौ). — d) T1 च (for स).

29 a) V1 T G3.6 दमस्व (for दमं). K2.7 B6 [illegible]

C. 12. 11020
B. 12. 300(299). 29
K. 12. 305. 29

स्वाध्यायनित्योऽस्पृहयन्परेषा-
मेकान्तशील्यूर्ध्वगतिर्भवेत्सः ॥ २९
सर्वानेताननुचरन्वत्सवच्चतुरः स्तनान् ।
न पावनतमं किंचित्सत्यादध्यगमं क्वचित् ॥ ३०
आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रतिसंचरन् ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ३१
यादृशैः संनिवसति यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ ३२
यदि सन्तं सेवते यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ ३३
सदा देवाः साधुभिः संवदन्ते
न मानुषं विषयं यान्ति द्रष्टुम् ।
नेन्दुः समः स्यादसमो हि वायु-
रुच्चावचं विषयं यः स वेद ॥ ३४
अदुष्टं वर्तमाने तु हृदयान्तरपूरुषे ।
तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ॥ ३५

---

(marg. as in text) G3 M5. 7 चार्जवम्; K6 Da3. a4 T1 G1. 6 स्वार्जं° (for ह्यार्जं°). K2 आनृशस्यं; K6 G1 °शंस्य (for °शंस्यं). — b) K7 G1 धृतिस् (for धृतिं). K6 V1 B0. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 अति-; G2 M1. 5–7 इति (for अभि-). D5. 7 -सेव(D7 °व्य)मानं (for °मानः). — c) G1 स्वाध्यानिषिद्धो (sic) (for °यनित्यो). D5 om. from स्पृहयन् up to स्तनान् (in 30b). D7 न स्पृहयेत्; G2 [s]स्वहरः (for ऽस्पृहयन्). — d) K1. 2 -शीलो; T2 -शय्यो (for -शीली). K1. 2 ह्यूर्ध्वं- (for ऊर्ध्वं-). B8 D9 -मतिर् (for -गतिर्). K6 B0. 7. 9 Da3. a4 T2 M1. 5–7 भवेत (for भवेत्सः).

30 Before 30, T1 G1. 6 ins. साध्याः. D5 om. 30ab (cf. v. l. 29). — a) K1 स्वेनान्; K4 V1 B8 स्वेतान्; K6 Da3. a4 Dn1. n4 D2. 3. 8 चैनान्; B0. 7. 9 D7 चैतान्; T G1. 3. 6 वेदान्; M1. 7 लोकान्; M5. 6 देशान् (for एतान्). K7 B9 परि- (for अनु-). K6 -घरन्; K7 D4. 7. 9 -च(D4 -व)रेद्; T2 -भवन् (for -चरन्). B0 सर्वांस्त्वेतननुचरेन्; G2 सर्वं स्वेताननुचरन्. — c) K1. 6 corrupt; M1. 6. 7 न पावनमतः किंचित्. — d) K1 अध्यगतं; K2 अन्यगमं (for अध्य°).

31 Before 31, T1 G1. 6 ins. हंसः. — a) K7 G1 आचक्ष्ये; G2 °चक्ष्ये (for °चक्षे). K6 मानवेभ्यो; V1 B0. 8. 9 Dn1 Ds1 मानुषे(B8 Dn1 °ष्ये)भ्यो (for मनुष्येभ्यो). — b) T2 M1. 5–7 प्रहितश्चरन्; G1 परिसंचरन् (for प्रति°). — c) K6 B6 (marg. as in text) Da3. a4 संयानं; T2 सौपानं (for सोपानं).

32 a) K1. 2. 4 यादृशः (for यादृशैः). K1 स विवसते; K2. 4 संनिवहते; K7 D4. 9 संविवसते; D5. 7 संनिवसते; T1 G6 -वा संवदते; G1. 3 M1. 5–7 संनिवदते; G2 स विवहते (for संनिवसति). T2 यो यादृशैः संवदते. — b) K1. 2. 4 चैव (for चोप-). — c) K1. 2 इच्छेश्च; K6 D5. 7 इच्छेत (for इच्छेच्च). — d) B9 Da4 पुरुषः.

33 a) K6 V1 B0. 7–9 Da3. a4 Dn1. n4 Ds1 D2. 3. 5. 7. 8 G2 M1. 5–7 सेवति (for °ते). — b) T1 G1. 6 वा यदि वा (for यदि वा). T1 स्तेयम् (for स्तेनम्). D5 एव च (for एव). — c) V1 B0 रंगं; T G1–3. 6 M1. 5–7 राग- (for रङ्ग-). K1 -वसं; T1 -वशः (for -वशं). — d) G1 वयम् (for वशम्).

34 a) K1. 2. 4 V1 यदि; B6 (marg. as in text) यदा; D5. 7 यथा (for सदा). K2 सेवाः (sic); G1. 3 देवः (for देवाः). K1 संह्वंति; K2 संवदंति; K4 संवहंति; K7 V1 D4. 9 संवसंति; B6–8 Da4 °संते; B9 संनमंत; Dn4 संवदंतं; T1 G6 °संतो; G1. 3 °दंतो (for संवदन्ते). — b) Da4 मानुषां (for °षं). D5 याति (for यान्ति). K1. 6. 7 B8 (marg. as in text) D4. 7. 9 दुष्टं; D5 G3 दृष्टं (for द्रष्टुम्). K2 न मानुषो विशति **दुष्टं. — c) K1. 2. 4 इंद्रः; V1 B0. 6–9 Da3. a4 T G1–3. 6 M1. 5–7 नेंद्रः; D5. 7 नरेंद्र- (for नेन्दुः). K1 समाः. K7 D4. 9 असमा हि तस्य; D5. 7 °मो हितः स्याद् (for °मो हि वायुर्). ❀ Cn: इन्दुरमृतमयोऽपि न समः किं तु उपचयापचयधर्मा । तथा वायुरप्यसम एव, मन्दमध्यमतीव्रभेदात् । ❀ — d) K2. 6. 7 D9 यश्च; D5. 7 G2 M1. 5–7 यस्य; Ca यः स (as in text). K7 वेदाः; M1. 5. 7 वेदः (for वेद).

35 a) K4 अनुष्टं; B6 Ds2 G6 अदृष्टं (for अदुष्टं). K7 B6 वर्तमानं; T1 G1. 3. 6 M7 °ते यस (for °माने). K7 तु (for तु). K2 अदुष्टवर्तो माने तु; Ds1 °ष्टं वर्तमानेषु. — b) K7 D4. 9 -पौरुषे; B9 -पुरुषे; Ds1 -पूरुषः (for

शिश्नोदरे येऽभिरताः सदैव
स्तेना नरा वाक्परुषाश्च नित्यम् ।
अपेतदोषानिति तान्विदित्वा
दूराद्देवाः संपरिवर्जयन्ति ॥ ३६

न वै देवा हीनसत्त्वेन तोष्याः
सर्वाशिना दुष्कृतकर्मणा वा ।
सत्यव्रता ये तु नराः कृतज्ञा
धर्मे रतास्तैः सह संभजन्ते ॥ ३७

अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
धर्मं वदेद्व्याहृतं तत्तृतीयं
प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ ३८

साध्या ऊचुः ।

केनायमावृतो लोकः केन वा न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ ३९

हंस उवाच ।

अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ ४०

साध्या ऊचुः ।

कः स्विदेको रमते ब्राह्मणानां
कः स्विदेको बहुभिर्जोषमास्ते ।
कः स्विदेको बलवान्दुर्बलोऽपि

C. 12. 11032
B. 12. 300(299). 41
K. 12. 305. 41

---

पे). — $^{c}$) G1 प्रीणंते (for प्रीयन्ते). — $^{d}$) K1 D5. 7 मार्गं; Ds1 मार्गं (for मार्ग-). Da3. a4 सतां मार्गंति तेन वै.

36 $^{a}$) Bo. 8 [ऽ]पि (for ये). K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 निरताः (for ऽभि°). — $^{b}$) K1. 2 B9 Dn4 T2 -पु(K2 -पू)रुषाश्च; Ds1 -परुषश्च (for °षाश्च). — $^{c}$) K3 -देवान्; T G1–3. 6 M1. 5–7 -धर्मा (for -दोषान्). ❀ Cn: अपेतदोषान्, प्रायश्चित्तेनेति शेषः। ❀ — $^{d}$) Da3. a4 Dn4 दूरा (for दूराद्).

37 $^{a}$) T2 G6 -सत्येन (for -सत्त्वेन). T1 om. न तो-. D5. 7 न वै देवा हीनसत्त्वे मनुष्याः. — $^{b}$) G1 सर्वाशना-दुष्कृतं कर्मणा वा. — $^{c}$) K7 सत्यं (for सत्य-). K1 नरः. — $^{d}$) K6 G3 ते (for तैः). K2 सहस्तं (for सह सं-). K7 D4. 9 संवसंति; Da4 Ds संभजंति (Da4 °तं) (for °जन्ते).

38 $^{a}$) D5 om. (hapl.) from व्याहृता up to हृतं (in 38$^{d}$). K6 व्याहृतान्; Dn4 °दात् (for °तात्). G1 अव्याहृतं व्याहृताच्छ्रेयमाहुः. — $^{b}$) Dn1 वेदे; G1 वदे (for वदेद्). K1. 4 om. (hapl.) from तद्द्वि up to व्याहृतं (in 38$^{d}$). G2 om. from तद्द्वि up to चतुर्थम् (in 38$^{d}$). — K2 om. 38$^{cd}$. V1 reads 38$^{c}$ on marg. — $^{c}$) Ds2 T1 G1. 6 धर्म्यं (for धर्मं). B9 वेदेद् (for वदेद्). Dn4 तृतीये. — $^{d}$) Da4 तं (for तच्).

39 $^{a}$) K1 corrupt. D4 आवृता (for °तो). — $^{b}$) K1 om. केन वा न. — D5 om. (hapl.) 39$^{d}$–40$^{c}$.

40 D5 om. 40$^{abc}$ (cf. v. l. 39). K7 om. 40$^{a}$. V1 reads 40 on marg. — $^{a}$) K2 लोके (for लोको). — $^{b}$) B7 मात्सर्यान्निःप्रकासते. — $^{c}$) D7 त्यजंति. — $^{d}$) Da3 केन (for सङ्गात्).

41 The sequence of 41–42 in D4 is: 41$^{a}$, 42$^{b}$, 41$^{c}$, and 42$^{d}$. V1 reads the ref. on marg. — $^{a}$) K1 का स्विद्; K7 Dn4 D4. 5. 7. 9 कश्चिद्; T G1. 3. 6 किं स्विद् (for कः स्विद्). V1 न रमते (for रमते). — D4 om. (hapl.) 41$^{b}$. — $^{b}$) K4 T G1. 3. 6 किं स्विद्; K7 B7 D5. 7 योषम्; Dn4 D5. 7. 9 कश्चिद् (for कः स्विद्). G1 दोषम् (for जोषम्). — G1 om. (hapl.) 41$^{c}$–42$^{b}$. — $^{c}$) K7 Dn4 D4. 5. 7. 9 कश्चिद्; T G3. 6 किं स्विद् (for कः स्विद्). K6 Bo Da3. a4 T G2. 3. 6 M1. 5–7 एषां (for एको). T G3. 6 वा (for ऽपि). — After 41$^{c}$, Dn1 reads 42$^{d}$ for the first time, repeating it in its proper place. Dn1 om. 41$^{d}$. D4 om. 41$^{d}$–42$^{a}$. — $^{d}$) K1 का स्विद्; K7 Dn4 D5. 7. 9 कश्चिद्; B6 कः स्विद्; Ds1 कं स्विद्; T G3. 6 किं स्विद् (for कः स्विद्). K7 D9 एकः (for एषां). K2 Dn4 नानुवै(Dn4 °वे)ति; K7 D5. 7. 9 नाभ्युपैति; Da3. a4 Ds2 नान्ववेति (for °वैति).

42 For the sequence in D4, cf. v. l. 41. D4 om. 42$^{a}$; G1 om. 42$^{ab}$ (for both, cf. v. l. 41). G2 om. (hapl.) 42. — $^{a}$) Dn4 प्राज्ञम् (for प्राज्ञ). B7 om. ब्राह्मणानां. — $^{b}$) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 चैको (for एको). B7 D5. 7 योषम् (for जोषम्). — $^{c}$) Dn4 प्राज्ञम्. K7 V1 B6. 9 Da3. a4

12. 11032
12. 300 [299]. 41
12. 305. 41

कः स्विदेषां कलहं नान्ववैति ॥ ४१

हंस उवाच ।

प्राज्ञ एको रमते ब्राह्मणानां
प्राज्ञ एको बहुभिर्जोषमास्ते ।
प्राज्ञ एको बलवान्दुर्बलोऽपि
प्राज्ञ एषां कलहं नान्ववैति ॥ ४२

साध्या ऊचुः ।

किं ब्राह्मणानां देवत्वं किं च साधुत्वमुच्यते ।
असाधुत्वं च किं तेषां किमेषां मानुषं मतम् ॥ ४३

हंस उवाच ।

स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते ।
असाधुत्वं परीवादो मृत्युर्मानुषमुच्यते ॥ ४४

भीष्म उवाच ।

संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्तितः ।
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ॥ ४५

इति श्रीमहाभारते शान्तिपर्वणि अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥

---

D5. 7. 9 G1 M1. 5–7 एषां ( for एको ). — D4 om. ( hapl. ) 42ᶜ. Dn1 reads 42ᵈ for the first time after 41ᶜ. —ᵈ ) K1 प्राज्ञा. Dn4 येषां ( for एषां ). K1 नान्ववंति; K7 D4. 5. 7. 9 नाभ्युपैति; Da3. a4 Dn4 नान्ववेति ( for °वैति ).

43 G1 om. the ref. —ᵃ ) K2 ब्रह्मणानां. K6 वेदत्वं; Dn4 दैवत्वं; G1 देयत्वं ( for देवत्वं ). —ᵇ ) K6. 7 किंचित्; Ds1 किं तु; Ds2 किं नु ( for किं च ). G1 [अ]साधुत्वम् ( for साधु° ). B7 किं च साधु प्रमुच्युते. — Ds1 om. ( hapl. ) 43ᶜ–44ᵈ. D5 reads 43ᶜ–44ᵇ twice. —ᶜ ) B7 Dn1. n4 असाधुत्वे ( for °त्वं ). K2 transp. च and किं. —ᵈ ) M1. 7 तेषां ( for एषां ). K1 मानुष्यं; G1 °षीं ( for °षं ). T1 G6 व्रतं ( for मतम् ).

44 For the repetition in D5, cf. v. l. 43. Ds1 om. 44 ( cf. v. l. 43 ). —ᵃ ) K1 एषा; Dn4 येषां ( for एषां ). —ᵇ ) Bo D2 एव च ( for उच्यते ). —ᶜ ) Da4 D4 परीवादे; D9 °वाहो ( for °वादो ). —ᵈ ) K1. 4. 6 V1 Bo. 6–8 Da3. a4 D2. 3. 8 T G1. 3. 6 मानुष्यम्; D5. 7 मानुष; M7 °ष्य ( for °षम् ).

45 After the ref., T G1. 3. 6 M1. 5–7 ins. :

744* इत्युक्त्वा वरदो देवो भगवान्नित्य अव्ययः ।
साध्यैर्देवगणैः सार्धं दिवमेवारुरोह सः ।
एतद्यशस्यमायुष्यं पुण्यं स्वर्ग्यं तु ध्रुवम् ।
दर्शितं देवदेवेन परमेणाव्ययेन च ।

[ ( L. 1 ) G6 इत्युक्तो ( for °क्त्वा ). T2 G1. 3 परमो ( for वरदो ). — ( L. 3 ) T2 M1. 5–7 च ( for तु ). ]

—ᵃ ) Ds1 अहं ( for अयं ). K6 Ds1 श्रेष्ठ; B7 lacuna ( for श्रेष्ठः ). T G1. 3. 6 संवादोयमयं ( T2 G1 °दोयं नर- ) श्रेष्ठः ( T2 °ष्ठ ). —ᵇ ) D4 परिकीर्तिताः. —ᶜ ) D5. 7 कर्मणो ( for °णां ). K2 भूमिः; Da3 योनीः; D5. 7 G1 योनिं ( for योनिः ). ❀ Ca : क्षेत्रं, शरीरम् ॥ Cn : स्थूलसूक्ष्मभेदेन द्विविधम् । ❀ —ᵈ ) K1 संभावः; T2 सद्भावं; G1 सद्भावाः. K6 B9 Da3. a4 D7 सत्त्वम् ( for सत्यम् ).

Colophon. Ś1 D6 missing : K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan* : K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2–5. 7–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name* : K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2–5. 7–9 G3 M1. 5–7 हंसगीता ( B8 adds समाप्ता ); T1 साध्यहंससंवादः; G6 हंससाध्यसंवादः. — *Adhy. no.* ( figures, words or both ) : K6 24; B7 T1 G1. 6 123; B8 126; Dn1 125; Dn4 Ds2 G3 M5 124; T2 136; G2 139; M1. 6. 7 122. — *Śloka no.* : Da4 Dn1. n4 D8 45.

# २८९

युधिष्ठिर उवाच ।
सांख्ये योगे च मे तात विशेषं वक्तुमर्हसि ।
तव सर्वज्ञ सर्वं हि विदितं कुरुसत्तम ॥ १
भीष्म उवाच ।
सांख्याः सांख्यं प्रशंसन्ति योगा योगं द्विजातयः ।
वदन्ति कारणैः श्रैष्ठ्यं स्वपक्षोद्भावनाय वै ॥ २
अनीश्वरः कथं मुच्येदित्येवं शत्रुकर्शन ।
वदन्ति कारणैः श्रैष्ठ्यं योगाः सम्यङ्मनीषिणः ॥ ३
वदन्ति कारणं चेदं सांख्याः सम्यग्द्विजातयः ।
विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः ॥ ४
ऊर्ध्वं स देहात्सुव्यक्तं विमुच्येदिति नान्यथा ।
एतदाहुर्महाप्राज्ञाः सांख्यं वै मोक्षदर्शनम् ॥ ५
स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम् ।
शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसंमतैः ॥ ६
प्रत्यक्षहेतवो योगाः सांख्याः शास्त्रविनिश्चयाः ।
उभे चैते मते तत्त्वे मम तात युधिष्ठिर ॥ ७

C. 12. 1:0
B. 12. 30
K. 12. 30

## 289

☞ This adhy. is missing in Ś1 D6 (cf. v. l. 12. 274. 13; 283. 15).

1 After the ref., G5 reads 12. 290. 1 for the first time, repeating the same in its proper place. G6 om. 1. — $^{a}$) K1. 6 Da4 सांख्य- (for सांख्ये). — $^{b}$) Da3 D8 अर्हति (for °सि). — $^{c}$) K4. 6. 7 V1 Bo. 6-9 Da3. a4 Dn1. n4 D5 D2-5. 7-9 धर्मज्ञ (for सर्वज्ञ). — $^{d}$) B9 वेदितं; M1. 7 विहितं (for विदितं).

2 $^{b}$) D6. 7 योयं (D7 योगं) योगि-; T1 G1-3. 6 योगं योगा (by transp.). — $^{c}$) K4 B7 Dn1. n4 D8 D2. 4. 7. 8 कारणं; D3 °ण- (for °णैः). K1. 2. 4 V1 B8 (orig.) Dn1. n4 Ds2 D1. 8. 9 श्रेष्ठं; Bo. 8 (marg.). 9 Da8 श्रेष्ठ्यं; B7 lacuna; Da4 श्रैष्ठ्यः; D4 श्रेष्ठ-; D6. 7 सर्वे (for श्रैष्ठ्यं). — $^{d}$) B7 lacuna for स्वपक्षो. K7 D1. 9 स्वपक्षोद्भासनाय; Ds1 स्वयज्ञोद्भावनाय; D5 स्वपक्षोद्भव°; G1 स्वपक्षोदावि°. ❀ Cv (reading भावनाद्भावनाय वै): भावनात्, इहलोकभावनात् ध्यानात्। भावनाय, परलोकभावनाय। ❀

3 $^{a}$) K1 अनीश्वरेः; Da4 G8 °श्वरं (for °श्वरः). — $^{b}$) K7 एव; B6 एतत् (for एवं). K1. 2 V1 B6. 8. 9 Ds1 -कर्षण (K1 °णः); K4 B7 -कर्षणं; D2 -कर्षन; D1. 9 -कर्शनं; T2 -कर्शनः; G1 -सूदन (for -कर्शन). — D4 om. (hapl.) 3$^{c}$–5$^{d}$. V1 reads 3$^{cd}$ on marg. — $^{c}$) K4 B9 Dn1 D8 D2. 8. 8 कारण-; Bo. 8 (marg. as in text) Dn4 D5. 7 कारणं (for °णैः). K1 B8 श्रेष्ठं; K2. 6 Da4 श्रेष्ठ्यं; B8 (marg.) श्रेष्ठान्; Dn1 श्रेष्ठं; D5. 7 सांख्यं (for श्रैष्ठ्यं). — $^{d}$) K1. 2. 6 B7 योगात्; B6 (marg.) योगान्; D5. 7 T1 G3. 6 योगं; D9 योगे (for योगाः).

4 D4 om. 4 (cf. v. l. 3). M1. 5 om. (hapl.) 4$^{ab}$. — $^{a}$) K6. 7 वेदं; Da4 देवं; G1 ते तु (for चेदं). — $^{b}$) K1 सांख्यः; M6. 7 सांख्यं (for सांख्याः). M6 मनीषिणः (for द्विजातयः). — $^{c}$) T1 G6 विज्ञायैव (for °येह). K1 गते; K6 Da4 G1 गतिः (for गतीः). G2 विज्ञायांतवतीः सर्वा. — $^{d}$) Ds1 विरक्ते; D5. 7 विमुक्तो; M7 विरक्ता (for °क्तो). K6 (before corr. as in text) विषये तु (for °येषु). K4 च (for यः).

5 D4 om. 5 (cf. v. l. 3). — $^{a}$) K6 B7. 9 स्व-; K7 D9 सु-; T2 सं- (for स). K2 सुव्यक्तो; Da4 lacuna (for °क्तं). G2 M1. 5-7 ऊर्ध्वं स्वदे(G2 स दे)-हमुत्सृज्य. — $^{b}$) K1. 2 विमुच्येतेति नान्यथा; D5. 7 मुच्येदिति मतिर्मम. — D6 om. (hapl.) 5$^{d}$–7$^{a}$. — $^{d}$) K1 G1 सांख्यो; K2. 4 V1 Bo D9 T2 G2. 6 M1. 5-7 सांख्या (for सांख्यं). G1 योग- (for मोक्ष-). Dn4 -नाशनं; G8 -दर्शिनः (for -दर्शनम्).

6 D5 om. 6 (cf. v. l. 5). — $^{a}$) K1. 2. 4. 7 D4. 7. 9 स्वपक्ष- (for °क्षे). K4 D2 -करणं (for का°). — D7 om. (hapl.) 6$^{bc}$. — $^{b}$) K1. 4. 7 D4. 9 समर्थ-; B8 सपक्ष-; Dn1 Ds1 D8 समये; Dn4 समत्वे (for (for °र्थं). K1 हितां; K4 हिते (for हितम्). — $^{d}$) D7 G2 तद्विधैः. G1 -संहितैः (for -संमतैः).

7 D5 om. 7$^{a}$ (cf. v. l. 5). — $^{a}$) T2 -हेतुतो

c 12.11043
B. 12. 301[300]. 8
K. 12. 305. 8

उभे चैते मते ज्ञाने नृपते शिष्टसंमते ।
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥ ८
तुल्यं शौचं तयोर्युक्तं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ॥ ९
युधिष्ठिर उवाच ।
यदि तुल्यं व्रतं शौचं दया चात्र पितामह ।
तुल्यं न दर्शनं कस्मात्तन्मे ब्रूहि पितामह ॥ १०
भीष्म उवाच ।
रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् ।
योगाच्छित्त्वादितो दोषान्पञ्चैतान्प्राप्नुवन्ति तत् ॥ ११
यथा चानिमिषाः स्थूला जालं छित्त्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः ॥ १२
तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥ १३
लोभजानि तथा राजन्बन्धनानि बलान्विताः ।
छित्त्वा योगाः परं मार्गं गच्छन्ति विमलाः शिवम् १४
अबलाश्च मृगा राजन्वागुरासु तथापरे ।
विनश्यन्ति न संदेहस्तद्वद्योगबलादृते ॥ १५

---

(for -हेतवो). —ᵇ) G3 सांख्य- (for सांख्याः). — B9 Da3. a4 D8 om. (hapl.) 7ᶜᵈ; V1 reads the same on marg. —ᶜ) B0 स्वेते; G2 युक्ते (for तत्त्वे). — Ds1 D5. 7. 8 om. (? hapl.) 7ᵈ–8ᵃ. —ᵈ) G2 om. तात. K1 G2 युधिष्ठिरः.

8 Ds1 D5. 7. 8 om. 8ᵃ (cf. v. l. 7). D2 om. (hapl.) 8ᵃᵇ. —ᵃ) B8 (marg. as in text) उभे चैवं; M7 उभावेते. K4. 6 B7–9 Ds2 D8. 9 ज्ञाते (for ज्ञाने). —ᵇ) M1. 5–7 युक्ते वै (for नृपते). —ᶜ) K1 D5. 7 अनुतिष्ठे; K2. 4 °शिष्टे (for °ष्ठिते). G1 यथा शास्त्रे.

9 ᵃ) D5. 7 सत्यं (for तुल्यं). K1 Dn1 Ds1 D2. 5. 7. 8 तपो(K1 °थो)युक्तं; K2. 4 तयोरुक्तं; K7 D4. 9 तयोर्व्यक्तं; B6. 9 तयोर्ह्युक्तं; B8 (marg.) त्वयोह्युक्तं; T G1. 3. 6 तयोरेका; G2 तयोर्ह्येकं; M1. 5–7 द्वयोरेकं (for तयोर्युक्तं). —ᵇ) K1 यदा (for दया). Dn4 वा (for च). —ᶜ) G1 भूतानां (for व्र°). —ᵈ) K2 यः (for न). Da4 दर्शनं तत्समं तयोः; G1 °नं नाम संतयोः. — After 9, T G1. 3. 6 ins.:

745* तयोस्तु दर्शनं सम्यक्सूक्ष्मे भावे प्रसज्यते ।

[T2 G3 सूक्ष्मभावे; G1 सूक्ष्माभावो (for सूक्ष्मे भावे).]

— After 9, B6 ins. an addl. colophon [*Sub-parvan:* मोक्षधर्म. — *Adhy. name:* योगविधि)].

10 G3 om. the ref. —ᵃ) D4 G2 तुल्य- (for तुल्यं). —ᵇ) G2 यथा (for दया). K4 Dn1. n4 D8 फलं तथा (for पितामह). — K2 B9 om. (hapl.) 10ᶜᵈ. D7 reads 10ᶜᵈ twice. —ᶜ) K4. 6 Dn1. n4 Ds D2. 3. 8 T1 G1. 3. 6 न तुल्यं (by transp.); T2 न तुल्य-. —ᵈ) D8 तयोर् (for तन्मे). T2 महामते (for पितामह).

11 ᵇ) Da3. a4 शमं (for कामं). —ᶜ) G1. 2 योगं (for योगाच्). K1. 2. 4 [अ]हितान्; K6. 7 V1 B7. 9 Da4 Dn1. n4 Ds2 D2. 3 (marg. as in text). 4. 5. 7–9 T1 ततो (for [आ]दितो). —ᵈ) K6 यश्च (for पञ्च). K1. 4 तां; V1 T G1. 3. 6 M1. 5–7 ते; B6. 7. 9 Da3 तान् (for तत्).

12 ᵃ) D7 तथा (for यथा). K1. 2. 6 D4. 5. 7 वा; K4. 7 B0 Dn1. n4 Ds D2. 3. 8 [ए]व (for च). K1. 2 V1 B6–8 Da3. a4 D4. 5. 7. 9 M1. 5. 6 स्थूलं; T2 स्थूलो (for स्थूला). ❀ Ca. n. s.: अनिमिषाः, मत्स्याः। ❀ —ᵇ) B9 स्थित्वा (for छित्त्वा). —ᶜ) B6. 8 T1 G3. 6 तथा योगात्; G1 तपोयोगात् (for तथा योगास्). ❀ Cn: योगशब्दोऽत्र प्रायेण मत्वर्थीयोऽच्प्रत्ययान्तः (Pāṇini 5. 2. 127) योगिपरः प्रकरणाज्ज्ञेयः। ❀ —ᵈ) D5. 7 श्वसंतं; G1 पदवीं (for तत्पदं). K4 Da4 -कल्मषः; K7 D4. 5. 7. 9 -कल्मषं (for -कल्मषाः). G3 पदवीं यांत्यकल्मषाः.

13 ᵃ) D5. 7 यथैव (for त°). K1 वागुरौ; B8 M6 °राश्च; Da1 °रं; M7 °रा (for °रां). ❀ Ca. n: वागुरां, पाशवर्तीं स्नायुरज्जुम्। ❀ —ᵇ) G2 पलायंते (for बलवन्तो). D5. 7 महा- (for यथा). —ᶜ) G1 प्राप्नुवन् (for °युर्). K7 D4. 9 G2 निर्मलं; T2 G1 विमला (for °लं). —ᵈ) K1 गच्छंति; K7 D4. 9 निर्मुक्ताः; M7 विमुक्तः (for °क्ताः).

14 ᵃ) T2 G1 लोहजानि; M1. 5–7 योग° (for लोभ°). —ᶜ) K1. 2 V1 T1 G3. 6 योगात् (for योगाः). —ᵈ) K6. 7 B6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 T G1. 2. 6 M1. 5–7 विमलं; G3 परमं (for विमलाः). V1 भृशं (for शिवम्).

15 ᵃ) G1 यथा (for मृगा). —ᵇ) K7 B8 Da3 D4. 9 T G1. 3. 6 यथापरे (for तथा°). D5. 7 वागुरासु° [illegible] परे. —ᶜ) K... G... विनश्य(K6 °स्यं)ति; D5. 7

बलहीनाश्च कौन्तेय यथा जालगता झषाः ।
अन्तं गच्छन्ति राजेन्द्र तथा योगाः सुदुर्बलाः ॥ १६
यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिंदम ।
तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः ॥ १७
कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परंतप ।
अबला वै विनश्यन्ति मुच्यन्ते च बलान्विताः ॥ १८
अल्पकश्च यथा राजन्वह्निः शाम्यति दुर्बलः ।
आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगोऽबलः प्रभो ॥ १९
स एव च यदा राजन्वह्निर्जातबलः पुनः ।
समीरणयुतः कृत्स्नां दहेत्क्षिप्रं महीमपि ॥ २०
तद्वज्जातबलो योगी दीप्ततेजा महाबलः ।
अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् ॥ २१
दुर्बलश्च यथा राजन्स्रोतसा ह्रियते नरः ।
बलहीनस्तथा योगो विषयैर्ह्रियतेऽवशः ॥ २२
तदेव च यथा स्रोतो विष्टम्भयति वारणः ।
तद्वद्योगबलं लब्ध्वा व्यूहते विषयान्बहून् ॥ २३

C. 12. 110[illegible]
B. 12. 301[illegible]
K. 12. 306[illegible]

---

निवध्यंति. — d) M1. 6–7 यथा (for तद्वद्).

16 Da3. a4 om. 16ab. — b) K4. 7 Dn1. n4 D2. 4. 8 M6 जालं; M1. 7 बाल- (for जाल-). — c) K6 V1 Bo. 6–9 Da3. a4 Dn1 Ds D2. 3. 8 वधं; K7 अंतर्; Da4 पृष्ठं (for अन्तं). D3. 4 गच्छति; D5 गच्छंते. D5 om. from राजेन्द्र up to विपद्यन्ते (in 17c). — d) K6 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 G2 M1. 6–7 योगास्तद्वत् (for तथा योगाः). Ds सुदुर्लभाः; T1 °र्बलात् (for °र्बलाः). V1 योगहीनास्तथा जनाः; D7 तथा योगस्य दुर्लभाः.

17 D5 om. 17abc (cf. v. l. 16). K1 om. (hapl.) 17. — a) K2. 4 D4 T G1. 3. 6 सूक्ष्माः; K7 Da3 शूक्ष्मं; D9 शूक्ष्माः (for सूक्ष्मं). — b) B8 transp. प्राप्य and जालम्. Da3. a4 अरिंदमं. — c) K6 Ds1 शक्ता (for सक्ता). K2 विमथ्यंते; K4 विपश्यति; K7 पद्यंते; Ds2 विषीदंते (for विपद्यन्ते). — d) K2. 4 T2 G1 विमुच्यंते; D5. 7 विपद्यंते (for मुच्यन्ते च).

18 K2. 4 om. (hapl.) 18. — a) K7 T1 G1. 3. 6 बद्धा (for बद्धास्). — b) K1 B8 (marg.) तद्वद्योगः; K7 B8 (orig.) D5. 7 °गात् (for °गाः). K7 Da4 G3 परंतपः. — c) K6 B6 Da3 अबला हि; Dn4 °लायै (for °ला वै). — d) K7 मुच्यते च; B8 T G1–3. 6 M1. 5–7 विमुच्यंते.

19 b) Da4 त्वाह्निः (for वह्निः). K1. 2 चाप्यति (for शाम्यति). Ds2 दुर्लभः; G1 दुर्बला. — c) T G3 आक्रांतम् (for आक्रान्त). T2 G1 बंधनैः; G3 वेधनैः (for इन्धनैः). — d) K1 योगो छला (sic); K1. 6 V1 B6–9 D5. 7 G2. 3 M1. 6. 7 योगबलः; K7 G1 योगोबल (sic); T G6 योगबलं (for योगोऽबलः). K1. 2. 4. 6 B6. 7. 9 Da3. a4 प्रभुः; K1 प्रभोः (for प्रभो).

20 a) B8 एवं (for एव). K1. 2 हि; K7 तु; D4 तु (for च). K2 V1 T G1. 3. 6 M1. 5–7 यथा (for यदा). — b) K7 ज्ञान-; D4 ज्ञात-; G1 ज्यातिर् (for जात-). T2 -बलं (for -बलः). K6 प्रभुः (for पुनः). — c) D4 समीरणे (for °रण-). V1 Bo. 6 7. 8 (marg). 9 Da3 a4 Dn1. n4 Ds2 D2. 3. 8 -गतः (for -युतः). K6 T2 M1. 5–7 कृत्स्नं; Bo. 8 Dn1. n4 Ds D2. 3. 8 क्षिप्रं; B6. 9 Da3 G2 कृत्स्नान्; Da4 G1 कृत्स्ना (for कृत्स्नां). K4 समीरण यथा क्षिप्रं (sic). — d) Bo. 3 Dn1. n4 Ds D2. 3. 8 कृत्स्नां; D5. 7 दीप्तो (for क्षिप्रं). K1. 2. 4 V1 B6. 8. 9 Da3. a4 महीमिमां; K6 महीपतिः; D7 °पते (for °मपि).

21 a) Bo जाति- (for जात-). D2 तद्वज्जातो बलयोगा (corrupt). — b) M1. 7 दीप्ततेजो (for °तेजा). K2 महाबलाः. — c) K1 इवादित्याः. — d) K1 कृत्स्नां. K2 संशोचयेज्; B6 शोषयते; G1 संशोधयेज् (for °षयेज्).

22 b) K6. 7 Bo Da3. a4 D4. 9 श्रोतसा (for स्रो°). K2 नेयते; K6 V1 Bo. 7 क्रियते; T G1 ह्रीयते (for ह्रि°). — c) K1 योगी; B8 योगाद्; G2 योगे (for योगो). — d) D7 T G3 ह्रीयते; G1 स्तूयते; G2 स्मृयते (for ह्रियते). Dn1 D1 M6 यशः (for ऽवशः). K7 ह्रियते विषयैर्वशः.

23 a) T1 G1. 6 तथैव; G3 तदैव (for तदेव). K1. 2. 4 B8 (marg.) तु; K7 D4. 9 हि (for च). Dn1. n4 Ds2 D2. 5. 7. 8 T1 G3. 6 महा- (for यथा). K6. 7 Da3. a4 Ds1 D2. 3. 9 श्रोतो (for स्रोतो). — b) K2 विष्टंभयंति; V1 Bo. 6. 8. 9 विष्कंभयति (for विष्टम्भ°). G1 शिष्टं भवति वारणः. — c) K3 B9 D5. 7 योगी; Da3 D4 T1 G3 योगो (for योग-). G3 बद्धा (for लब्ध्वा). — d) K6 D3. 4. 6 गूहते; K1 Ds1 गृहते; B8 व्यूहतो; G1 द्रूहते (for व्यूहते). ❀ Cn: व्यूहते,

C. 12. 11060
B. 12. 30 (300). 24
K. 12. 305. 24

विशन्ति चावशाः पार्थ योगा योगबलान्विताः ।
प्रजापतीनृषीन्देवान्महाभूतानि चेश्वराः ॥ २४
न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः ।
ईशते नृपते सर्वे योगस्यामिततेजसः ॥ २५
आत्मनां च सहस्राणि बहूनि भरतर्षभ ।
योगः कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ २६
प्राप्नुयाद्विषयांश्चैव पुनश्चोग्रं तपश्चरेत् ।
संक्षिपेच्च पुनः पार्थ सूर्यस्तेजोगुणानिव ॥ २७
बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव ।
विमोक्षप्रभविष्णुत्वमुपपन्नमसंशयम् ॥ २८
बलानि योगे प्रोक्तानि मयैतानि विशां पते ।
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव ॥ २९
आत्मनश्च समाधाने धारणां प्रति चाभिभो ।
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ॥ ३०
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ।
युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसंशयम् ॥ ३१

---

विक्षिपति तुच्छीकरोति ॥ Cv: व्यूहते, विरोधितया तर्कयति । ❀

24 a) K1. 2. 4 Da4 T G1. 3. 6 Ca चावशान्; D4 वावशाः (for चा°). ❀ Cn: अवशाः, स्वतन्त्राः ॥ Cv: अवशाः विष्णुवशाः, मृत्योरवशा वा । ❀ — b) B7. 8 Dn1. n4 Ds2 D3. 5. 7 योगाद्; Da3. a4 G1 योगो; G2 योगं; G6 योगान् (for योगा). D6 ·बलाम्वितः. — c) D5. 7 प्रजापतिर्ऋषिर्देवा· — d) K7 चेश्वरः (for °राः).

25 a) Da3. a4 धर्मो (for यमो). T G1. 3. 6 क्रूरो; G2 कालो (for क्रुद्धो). — b) K2 Da3. a4 Ds1 D4. 9 मृत्यु·; Dn4 मृत्युं (for मृत्युर्). K4 ·विक्रम· — c) K3. 4 एष ते; K7 Ds1 ईशंते (for ईशते). K7 नृपतेः. K1 D9 सर्वो; K3. 4 सर्गो; V1 सर्वं; T1 सत्त्वे (for सर्वे).

26 26–27 quoted in Śaṁkara's Br. Sū. Bhāṣya on 1. 3. 27. — a) K1. 2. 7 Ds2 D5. 7 आत्मानं (for आत्मनां). Br. Sū. Bhāṣya आत्मनो वै शरीराणि. — c) K7 B9 Dn4 D8 D4. 9 T G1. 3. 6 M1. 5–7 योगी; D5 योगे; D7 योगं (for योगः). K1. 2. 4 महीं (for बलं). — d) K6 D4 सर्वे (for सर्वैर्). T2 M1. 5–7 transp. महीं and चरेत्.

27 27ab is damaged in B6. — a) B0 विषयं. K4 V1 B7–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 M5 कश्चित्; K6 lacuna; B0 किंचित्; G2 तैश्च; Śāmkarabhāṣya कैश्चित् (for चैव). — b) T G1. 3. 6 तपश्चोग्रं पुनश्चरेत्; Cn Śāmkarabhāṣya कै( Cn क)श्चिदुग्रं तपश्चरेत्. — c) K4 संक्षिपेश्च; K6 Da3 संहियेच्च; Dn4 संक्षिपे च; G1 संक्षिपेच (for संक्षि°). B0. 7. 8 (marg. as in text) Dn1. n4 Ds2 D2. 3. 5. 7. 8 तात; Ds1 तानि; M1. 7 प्राप्तः (for पार्थ). — d) K4 B0 Dn4 D5. 8. 9 ·गुणानि च (for ·गुणानिव). Śāmkarabhāṣya सूर्यो रश्मिगणानिव.

28 a) K3 lacuna; K7 D5. 7 तु; D4 नु; G1 च (for हि). — b) D5 lacuna; D8 बंधलेशस्य; T1 G6 बंधने तस्य (for °नेशस्य). D4 पार्थिवः. ❀ Cs: बन्धनेशस्य, कामादिनियमनसमर्थस्य ॥ Cv: बन्धने करणानां विग्रहे, ईशस्य समर्थस्य । ❀ — c) K7 B0. 7 Dn1. n4 D8 D2. 3. 8 T1 G2. 6 विमोक्षे; G1 विमोक्षं (for °क्ष·). — d) K1. 2 D4. 9 न संशयः; K7 असंशयः.

29 a) G1 बलस्य (for बलानि). K6 V1 B0. 6. 7. 9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7. 8 G3 योग· (for योगे). B7 Dn1 D8 D2. 3. 8 ·प्राप्तानि (for प्रोक्तानि). — b) K6 मयोक्तानि (for मयैतानि). — c) D5 निदर्शनार्थे; T G1. 6 निदर्शितानि; G3 °र्शनानि (for °र्शनार्थं). D4. 9 शूक्ष्माणि. — D5. 7 om. (hapl.) 29d–30c; V1 reads the same on marg. — d) K6 वक्षामि. K7 D4. 9 [इ]ह (for च). K1. 2. 4 D9 तथा (for तव).

30 D5. 7 om. 30abc (cf. v. l. 29). V1 reads 30abc on marg. — b) K1 V1 B7. 8 (marg.) Da4 Cn धारणा; K2 धारणाः; K6 धारणां; K7 Ds1. s2 (before corr.) G2. 6 M1. 5–7 धारणं; B9 वारणा (for धारणां). K1. 7 D4. 9 चाभिभोः; K2 शाभिभो; K4 या विभौ; K6 नादितां; V1 B6. 7. 9 Da3 a4 भाविता (Da4 °ना); B0. 8 Dn1. n4 D8 D2. 3. 8 वा विभो (for चाभिभो). ❀ Cn: धारणा, नाभ्याद्यन्यतमदेशे चित्तस्य स्थिरीकरणम् । ❀ — c) K1. 3. 4 निदर्शनार्थं (for °नानि). B0 K3 सूक्ष्मानि; D4. 9 शूक्ष्माणि. — d) T2 श्रुणु. B6. 7. 9 Da3. a4 मनुजर्षभ (Da4 °भः).

31 a) K1 om. (hapl.) from धन्वी up to यथा (in 32a). — b) K7 V1 B0. 6. 8. 9 Ds1 D3. 4. 7. 9 T1 G1. 3. 6 M1. 5–7 लक्षं; Da3 वक्ष्यं (for लक्ष्यं). — T1 om. (hapl.) 31c–37b. — c) Ds1 युक्ता (for युक्तः). K6 Da4 तथा (for तथा). — d) K6 आप्नोति (for प्रा°). K2 संशयं; K7 B7 असंशयः.

स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलम् ।
पुरुषो यत्त आरोहेत्सोपानं युक्तमानसः ॥ ३२
युक्त्वा तथायमात्मानं योगः पार्थिव निश्चलम् ।
करोत्यमलमात्मानं भास्करोपमदर्शनम् ॥ ३३
यथा च नावं कौन्तेय कर्णधारः समाहितः ।
महार्णवगतां शीघ्रं नयेत्पार्थिव पत्तनम् ॥ ३४
तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित् ।
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ॥ ३५
सारथिश्च यथा युक्त्वा सदश्वान्सुसमाहितः ।
देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ॥ ३६
तथैव नृपते योगी धारणासु समाहितः ।
प्राप्नोत्याशु परं स्थानं लक्षं मुक्त इवाशुगः ॥ ३७
आवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः ।
पापं हन्तेव मीनानां पदमाप्नोति सोऽजरम् ॥ ३८

C. 12.11.. B. 12.30.. K. 12.30..

---

32 With 32, cf. 12. 304. 22–23. K1 om. up to यथा; T1 om. 32 (for both, cf. v. l. 31). — a) Da4 -पूर्वे (for -पूर्णे). ❀ Cn: पात्रे, शिरसि धृते। ❀ — b) B9 निश्चलां; G6 °लः (for °लम्). — c) K4 V1 Bo. 6–9 Da3. a4 Dn1 Ds D2. 3. 5. 7. 8 T2 युक्त; K6 युक्त; Dn4 त्यक्त; D9 यत्न (for यत्त). — d) M1 सोपाना (for °नं). K2 मुक्त- (for युक्त-).

33 T1 om. 33 (cf. v. l. 31). — a) K4. 7 युक्ता; V1 Bo. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 युक्तस् (for युक्त्वा). D2 om. from यमात्मानं up to शीघ्रं (in 34c). B8 परात्मानं (for [त]यमात्मानं). K6 मुक्तस्त्वयायमात्मानं. — b) K6 Da3. a4 योगं; K7 D4. 9 T2 G1. 3. 6 योगी; B8 (marg. as in text) योगात् (for योगः). K1 निश्चलाः; K2 निश्चलः; B3 (marg. as in text) निश्चयं (for °लम्). — c) K1 असूलम् (for अमलम्). — d) Da4 -दर्शन.

34 T1 om. 34 (cf. v. l. 31). D2 om. 34abc (cf. v. l. 33). — a) K2 om. च. K7 D4 कौंतेय. — b) K2 समन्वितः (for समाहितः). — c) K1. 2. 4 महार्णवगतं शीघ्रं. — d) K2 निश्चलः; Dn1. n4 Ds D3–4. 8 -सत्तम.; D5. 7 यत्नतः (for पत्तनम्).

35 T1 om. 35 (cf. v. l. 31). — a) K4 -समाधानं; M1. 5–7 -समाधानाद् (for °धानं). — b) K4 Da4 युक्ता; K6 मुक्ता; Da3 मुक्त्वा; Ds1 M1. 5–7 युक्तो; Ds2 युंक्त्वा (for युक्त्वा). Da4 योगो न (for योगेन). K1. 2. 6. 7 V1 Bo. 7. 8 (marg. as in text). 9 Da3 D4. 5. 7. 9 G2 योगवित् (for तत्त्व°). — c) Dn4 दुर्गम- (for °मं). Da4 आप्स्येति (for आप्नोति). K1 दुर्गंस्थानमाप्नोति; B3 (marg.) दुर्गस्थानमवाप्नोति. — d) K1 मुक्त्वा; M1. 7 भित्त्वा (for हित्वा). Ds1 नृपः.

36 T1 om. 36 (cf. v. l. 31). — a) G1 यदा (for यथा). K4 त्यक्ता; K6 युक्ता; K7 Ds2 युंक्त्वा; D3 मुक्त्वा; G1 युक्तान्; G3 युक्त- (for युक्त्वा). — After 36ab, K7 D4. 9 read 37cd. K2 om. (hapl.) 36c–37b. G3 om. 36c–39d. — d) V1 धनिनं; Bo. 8 (marg.) रथिनं; D5. 7 वेगेन (for धन्विनं). K1. 4 भरतर्षभ (K4 °भः); B7 Dn4 Ds1 D2. 8 पुरुषर्षभं; D5. 7 °र्षभः (for °र्षभ).

37 K2 T1 om. 37ab (cf. v. l. 36, 31). G3 om. 37 (cf. v. l. 36). — a) D2 तथैवं. — b) K1 दारुणासु; M6 धारणं सु- (for °णासु). — K7 D4. 9 read 37cd after 36ab. — c) T G1. 6 परमं (for [आ]शु परं). — d) K1. 2. 4 चाप-; K6 जालान्; V1 Bo. 6. 8 Da4 Dn1 Ds D5. 7. 8 लक्ष्यं; D4 T1 G1. 6 लक्ष-; T2 G2 लक्ष्य- (for लक्षं). K6 B3 (marg. as in text) युक्त; Da4 मुक्तम्; D5. 7 शर (for मुक्त).

38 G3 om. 38 (cf. v. l. 36). — a) V1 Bo. 7 Da3. a4 आविश्य; B8 G1 अवेश्य; Dn1. n4 D3. 5. 7 अवेक्ष्य; Ds D2. 8 Cn प्रवेश्य (for आ°). Da4 om. त्मनि चा. ❀ Cn: आत्मनि आत्मानं प्रवेश्य, वृत्तिसारूप्यं त्यक्त्वेत्यर्थः। ❀ — b) K6 Bo (marg. as in text) Da3. a4 M5. 6 योगस्; M7 योयं (for योगी). M6 तिष्ठंति. K6 B3 (marg. as in text) योचलः; T1 योवलः (for योऽचलः). — cd) B6 (marg. as in text) D5. 7 पाशं; T1 जालं; T2 G1. 6 जलं; Ca पापो (for पापं). K1 हंतीव; K4 Bo Ds D2. 8 हंति च; K6 V1 B7 Da3. a4 D4. 9 हंत्येव; T1 भित्त्वेव; G1 फेनैव (for हन्तेव). Ds मीतानां; T2 G2 M7 मानानां (for मीनानां). K7 Dn1. n4 D3 Cn (gloss: पुनीतानां, पवित्राणां सांख्यानामित्यर्थः) पापं हंति पुनीतानां. Ds सोंतरं; T2 सोजिरं. ❀ Ca: पापो हन्तेव मीनानामिति। यथा पापः पापाचारो हिंसारुचिर्मीनानां पदं स्थानं प्राप्नोत्येकचित्तः। ❀

39 G3 om. 39 (cf. v. l. 36). — a) Da3. a4 पश्चां (for नाभ्यां). K6 V1 B6. 7 Da3. a4 transp. कण्ठे and शीर्षे. T1 कर्णे (for कण्ठे). — b) K1 M1 वक्षसि; Bo. Da3. a4 ... मृत्सु (for वक्षसि). D5. 7

C. 12. 11075
B 12. 301[300]. 39
K. 12. 305. 39

नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः ।
दर्शने स्पर्शने चापि घ्राणे चामितविक्रम ॥ ३९
स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः ।
आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशां पते ॥ ४०
स शीघ्रममलप्रज्ञः कर्म दग्ध्वा शुभाशुभम् ।
उत्तमं योगमास्थाय यदीच्छति विमुच्यते ॥ ४१

युधिष्ठिर उवाच ।

आहारान्कीदृशान्कृत्वा कानि जित्वा च भारत ।
योगी बलमवाप्नोति तद्भवान्वक्तुमर्हति ॥ ४२

भीष्म उवाच ।

कणानां भक्षणे युक्तः पिण्याकस्य च भक्षणे ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥ ४३
भुञ्जानो यावकं रूक्षं दीर्घकालमरिंदम ।
एकारामो विशुद्धात्मा योगी बलमवाप्नुयात् ॥ ४४
पक्षान्मासानृतूंश्चित्रान्संचरंश्च गुहास्तथा ।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥ ४५
अखण्डमपि वा मासं सततं मनुजेश्वर ।
उपोष्य सम्यक्शुद्धात्मा योगी बलमवाप्नुयात् ॥ ४६

---

पार्श्वतः ( for °योः ). — c ) K6.7 V1 B0.6–9 Da3.a4 Dn1.n4 Ds2 D2.3.8.9 श्रवणे; Cap स्पर्शने ( as in text ). D2 वापि; T G1.2.6 M1.6–7 चैव; Cap स्नाने ( for चापि ). K1 दर्शने चक्षुषि घ्राणे; D4 दर्शन-श्रवणे वापि. — d ) D8 ( marg. as in text ) प्राणे ( for घ्राणे ). K1 Da4 -विक्रमं; K7 V1 Dn1 Ds1 D8 T1 M1.6–7 -विक्रमः ( for °म ).

40 a ) Da3 om. ( hapl. ) one यो. D9 योगी च ( for यो योगी ). — b ) B9 ( marg. as in text ) -परायणः ( for -समाहितः ). ❀ Cs : महाव्रतं, ब्रह्मचर्यम् । यद्वा, महाव्रतानि सनत्सुजातोक्तानि ( 5. 43. 12 ), ज्ञानं च सत्यं च तपः श्रुतं चेत्यादीनि । ❀ — c ) D5.7 आत्मनं ( for °ना ). K6 Da3.a4 G1 सूक्ष्म; D4.9 शूक्ष्मम्. — d ) K7 Da4 G3 युक्ते; D9 युक्तं; T1 G2.6 युक्त्वा; G1 युते; M1.6–7 युक्तैः ( for युङ्क्ते ).

41 a ) K1.2.4 शीलम् ( for शीघ्रम् ). K6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 अचलप्रख्यं ( Ds1 °स्थं ); T G1.3.6 M1.6–7 अनल( G1 °लः )प्रख्यः ( M1.7 °ख्यं ); G2 अमलप्रख्यं ( for °प्रज्ञ. ). — b ) K4.6 D9 दग्धा; K7 दिग्धो; G2 कृत्वा ( for दग्ध्वा ). — d ) K7 B7 T G6 यदिच्छति; Dn4 यदीच्छंति; Ds1 °च्छसि ( for °च्छति ). ❀ Cn : यदीच्छतीति योगिनः स्वेच्छया ब्रह्मलोकादौ गमनं, विदेहकैवल्यम्, देहधारणं चेति दर्शितम् ॥ Cp : यदीच्छति तदा विमुच्यते, नोचेत्तान्येव भुङ्क्ते, इति भावः ॥ Cs : कल्पावसानं तस्य जीवितुं शक्तिरस्तीति सूचितम्° । ❀ — After 41, K4 B6 ins. an addl. colophon [ *Sub parvan* : K4 B6 मोक्षधर्म. — *Adhy. name* : K4 B6 योगविधिः. — *Adhy. no.* : K4 120 ].

42 a ) T G6 यादृशान् ( for की° ). K1 आकारां कीसृचां कृत्वा ( corrupt ). — b ) G1 कर्म ( for कानि ). K2.4 जिह्वा ( for जित्वा ). D5 कक्षित्वा चैव भारत ( sic ); D7 काञ्जित्वा चैव भारत. — c ) T1 योगो ( for योगी ). G2 चाप्नोति ( for [अ]वा° ). G6 यो योगबलमाप्नोति. — d ) K1 ( *sup. lin.* as in text ).7 D4.9 अर्हसि ( for °ति ).

43 D5 om. the ref. — a ) K1.2.4 कर्मणां ( for कणानां ). K2.4 रक्षणे ( for भक्षणे ). G1 युक्तं ( for युक्तः ). — b ) K6 V1 B0.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.8 G2 M1.6–7 भारत ( for भक्षणे ). — c ) B8 भक्षणे; Da4 वर्जिने ( for वर्जने ).

44 K2.4 om. ( hapl. ) 44–46. G1 reads 44–45 on marg. — a ) D4 भुंजाना ( for °नो ). K6 पावकं ( for या° ). K1 तूक्षं ( for रूक्षं ). ❀ Cs : यावकं, यवान्नं, रूक्षं तैलघृतादिरहितम् । ❀ — b ) Da4 अरिंदमं. — c ) K6 B0.6–9 Da3.a4 Dn1.n4 D2.3.8 एकाहारो; V1 Ds °वासो ( for °रामो ).

45 K2.4 om. 45 ( cf. v. l. 44 ). K1 om. ( hapl. ) 45. G1 reads 45 on marg. — a ) V1 B6 ( marg. ).9 Ds T G1.3.6 चैव; B0 Da3.a4 Dn1.n4 D2.3.8 चैतान् ( for चित्रान् ). K7 D4.5.7.9 पक्षं ( D4.9 °क्ष- ) मासमृतुं चैव. — b ) Da3.a4 वत्सरांश्च ( for संचरंश्च ). K6 गुहां; K7 D4.5.7.9 T G3.6 गृहांस्; B6.7 अहस्; B9 Da3.a4 गुहांस्; G1 ग्रहं; G2 शुभास् ( for गुहास् ). Dn1.n4 Ds D2.3.8 संवत्सरानहस्तथा. — c ) Da3 पयोमिश्रो ( for °मिश्रा ). — d ) Da4 om. योगी.

46 K2.4 om. 46 ( cf. v. l. 44 ). — a ) G3 यो ( for वा ). V1 B0.6.7.9 Dn1.n4 Ds2 D3.5.7 T1 G1.3 M1.7 मांसं ( for मासं ). — b ) B9 तत्र तं; G2 संततं ( for सततं ). K7 मनुजेश्वरः; Ds1 °श्वरे. — 46cd is

कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च ।
भयं निद्रां तथा श्वासं पौरुषं विषयांस्तथा ॥ ४७
अरतिं दुर्जयां चैव घोरां तृष्णां च पार्थिव ।
स्पर्शान्सर्वांस्तथा तन्द्रीं दुर्जयां नृपसत्तम ॥ ४८
दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना ।
वीतरागा महाप्राज्ञा ध्यानाध्ययनसंपदा ॥ ४९
दुर्गस्त्वेष मतः पन्था ब्राह्मणानां विपश्चिताम् ।
न कश्चिद्व्रजति ह्यस्मिन्क्षेमेण भरतर्षभ ॥ ५०
यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ।
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ॥ ५१
अभक्तमटवीप्रायं दावदग्धमहीरुहम् ।
पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा ॥ ५२
योगमार्गं तथासाद्य यः कश्चिद्भजते द्विजः ।
क्षेमेणोपरमेन्मार्गाद्बहुदोषो हि स स्मृतः ॥ ५३

C. 12.1
B. 12.3
K. 12.3

partly damaged in B5. — c) ❀ Ca: उपोष्य, त्यक्त्वा । ❀ — d) K7 फलम् (for बलम्).

47 a) K4 जिह्वा (for जित्वा). G3 यथा (for तथा). — b) Ds1 D5.7 T G1.3.6 शीतोष्णं (for °ष्णे). Dn1 वर्षं. M1.5–7 वा (for च). — c) G1 इयं (for भयं). K6 V1 Bo.6.7.8 (marg.).9 Da3.a4 Dn1.n4 Ds D3.3.8 शोकं (for निद्रां). Da4 M7 श्वास- (for श्वासं). — d) Bo.6.7.8 (marg.).9 Da3.a4 Dn1.n4 Ds D2.3.8 G2 M5–7 Cn.s पौरुषान् (for °षं). K1.2.4 विजयं; B8 (marg. as in text) T G1.3.6 विनयं; D5 विनयांस्; D7 निचयांस् (for विष°).

48 a) Ds1 अरतिर्; D5.7 निर्जित्य; Cv (gloss: तस्मिन् स्त्रीयेषु वा रतिं) स्वरतिं (for अरतिं). K1 दुर्जयं; Da4 °यांश्. ❀ Cp: अरतिम्, आलस्यम् । ❀ — b) B1 कृष्णां; D4 तृष्णा. T G1–3.6 M1.5–7 भारत (for पार्थिव). — c) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 G3.6 स्पर्शं निद्रां; G2 M1.6.7 स्पर्शाः सर्वे (for स्पर्शान्सर्वांस्). K4.6 तंत्री; K7 Ds1 M1.7 तंद्री; D5.7 G3.6 तंद्रां (for तन्द्रीं). — d) D4 G3.6 M7 दुर्जेया (for °यां).

49 a) D5.7 महात्मानं (for °त्मानः). — b) K6 D9 सूक्ष्मम्. — c) K1.4 वीतराग- (for °रागा). K3.6.7 Bo.7–9 Dn1.n4 Ds D2.4.8.9 G1 महाप्रज्ञा; B8 °प्रज्ञां; D7 °त्मानो (for °प्राज्ञा). Da4 वीतरागान्महा-प्राज्ञा. — d) K1.2.4 दाना(K1 °न)ध्ययन-; K6 धाया°; Ds1 धाता°; D9 ध्यानाध्यायन- (for °ध्ययन-). K7 D4.9 -संगताः; B8 -संपदः; D3 Cs -संस्कृतः (Ds2 Cs °ताः); T G1.3.6 -संमताः (for -संपदा).

50 a) D8 दुर्गास्. D8 त्वेषं (for त्वेष). K1 स यः; K2.4 मयः; Dn1.n4 Ds2 D3 महा-; Ds1 D4 (also as in text) यतः (for मतः). — Da3.a4 om. 50cd. — c) K4.6 V1 Bo.7.8 (marg. as in text) Dn1.n4 Ds D2.3.5.7.8 यः कश्चिद् (for न कश्चिद्). K6 B3.8 (marg. as in text).9 क्षिप्रं (for ह्यस्मिन्). — d) Dn4 क्षेत्रेण (for क्षेमेण). B6 lacuna for भरतर्षभ. G3 शुभे क्षेमेण भारत.

51 K2 om. 51ab. — b) B8 (marg.) -हिंस्र-; D8 -सर्पं (for -सर्प-). D9 -सतीसृपं (for -सरी°). — c) K2 श्वभ्रवत्; K6 स्वभ्र°; B9 श्वोभ्र°; G1 अभ्र° (for श्वभ्र°). D3 तोयहीनञ्च. K4 श्वभ्रवत्तोयहीनं च. — d) K1 दुस्तरं; K2 दुर्लभं; K4 दुर्बलं (for दुर्गमं). K2.4 बल- (for बहु-). T2 कर्णकं (for -कण्टकम्).

52 a) K7 अभक्ष्यम्; Bo अव्यक्तम्; Dn1.n4 Ds D2.4.8.9 M1.5–7 अभक्षम्; D3 अभीक्ष्णम् (for अभक्तम्). G2 अटवि- (for °वी-). — b) Da3.a4 दारुदग्ध (for दाव°) D5 om. मही. — c) K2 corrupt. T1 G6 पंथानं तं दुराकीर्णं. — d) B7 अभिपते (sic); G2 M1.5.7 अतिपतेद् (for अभि°). K1.2.4 नरः (for युवा). K6 क्षेमेणाभिपते च (submetric); Da3.a4 °णाभिप(Da3 °ग)तेषु वा; D5.7 °णाभिद्यते यथा; G1 क्षमेण हि पतेद्युवा; G6 क्षेमेणाभिपतेत वा.

53 Before 53, T2 ins. भीष्मः. — a) K2.4 तथासाध्य; V1 B8 (marg.) समासाद्य; Ds1 D2.3 तथा सोद्य; T2 तथासाध्या (for तथासाद्य). — b) M1.5–7 न (for यः). K6 Bo.6–9 Da3.a4 Dn1.n4 D5 D2.3.8 व्रजते; V1 व्रजति; G2 रुजति (for भजते). K4 M1 द्विज (for द्विजः). K7 D4.5.7.9 कश्चिदेव व्रजेद्विजः. — c) K7 क्षणेन (for क्षेमेण). K2 [ओ]परमेन्; D4 [उ]परमान्; D9 °रामा; T1 °रमे (for °रमेन्). K1.2 B3 G2.3 M7 मार्गं; Da4 T G1.6 मार्गो (for मार्गाद्). — d) K7 स स्मृतां; Da3.a4 संभृतः; Dn4 T2 संस्मृतः (for स स्मृतः). G1 बहुदोषाभिसंस्कृतं.

54 54ab is damaged in B5. — a) K1 स्वस्थेयं; K6.7 B7–9 Da3.a4 D4.9 आ° (for सु°). K7 क्षर-; G1 सुर- (for क्षुर-). — b) Da3.a4 निश्रितासु; D5 निशितासु. Dn°... (for °तासु). — c) T1 धार-

